॥ श्रीः ॥

आशुकविकविभूषणपण्डितवर श्रीहरिशास्त्रिणा

प्रणीतः

# सिद्धिस्तवः

स्वरचिताटिप्पणविभूषितः

विक्रम सम्वत्

१९८०

जेलप्रेस जयपुर.

आह्लादैकनिधिं प्रसादमधुरामाकर्ण्य यन्मञ्जुलां
शुद्धां काव्यकलां महायुतमहोपाध्यायसूरीश्वरः ।
कल्याणाभिगतस्य यस्य च कृते दुर्गाप्रसादाभिधो
विद्वानाशुकवेः पदं समदिशत्सोऽहं हरिर्नौमि वः १

❀ श्रीः ❀

१—इतस्ततोऽपकृष्टार्था दम्भमात्रोपजीविनः ।
विवेककृपणाः कस्मै किम्प्रदास्यन्ति वञ्चकाः ॥

❀

२—उदारा हरयो हीमे विक्रमार्जितभोजिनः ।
भुञ्जाना अपि येऽन्येभ्य उत्सृजन्ति हतद्विपान् ॥

❀

३—मन्निर्मितमिदं काव्यमुद्यानम्प्राप्यमोदतः ।
विन्दन्तु शुचिवृत्तानि कवयो रसिका द्विजाः ॥

❀

४—खनन्तु नास्य फलवत्पद्यवृक्षान्स्वतुण्डतः ।
दुर्जनाः सूकरास्तस्मान्मयैषा विवृतिःकृता ॥

❀

५—येऽस्याम्परिणिनंसन्ति वातुलास्तुच्छदृष्टयः ।
द्विपास्तैरिदमालोच्यमादावस्याः प्रभुर्हरिः ॥

॥ श्रीः ॥

# ॥ समर्पणम् ॥

श्रीमन्माननीयगीजगढठाकुर श्री १०५ कुशलसिंहजीमहोदयानां जयपुरराजकीयप्रधानन्यायालय ( चीफकोर्ट ) न्यायाधीशानां सेवायाम्

श्रीमन् !

ग्रहीतासि गुणानां, निधिरसि नीतिविद्यानां, निवासकमलमसि श्रियः, आश्रयोऽसि परमुत्साहस्य, उदाहरणमसि सदाचरणस्य, मूर्तिरसि धर्मस्य, वेलास्थलमसि धैर्यसिन्धोः, उत्पत्तिक्षेत्रमसि गम्भीरतायाः, निलयोऽसि विनयस्य, लीलाभवनमसि कलानां, सत्कर्ताऽसि विदुषाम्, इति विविच्य बहुपरिश्रमेण पुस्तकस्वरूपे परिणमितां सिद्धिमिव, सिद्धिस्तवपुस्तिकामिमामनेकराजन्यचिह्नोपलक्षितयोः सुजातयोर्भवत्करकमलयोरर्पयामि ।

भवदीय—

गुणप्रणयवशम्वदः
श्रीहरिशास्त्री दाधीचः,
जयपुरम्.

अक्षय तृतीया ३
वैशाखशुक्लपक्षः
वि. सं. १९८१

॥ श्रीः ॥

# * संक्षिप्तमावेदनम् *

अयि भोः पण्डितप्रकाण्डा मन्त्रशास्त्रप्रणयिनो महानुभावाः ! ! ! इह खलु समस्तसुरगणगीयमानगुणप्रकर्षे भारतवर्षे सकलसाधककामपूरणचिन्तामणिं रमणीयां स्तोत्रचूडामणिं को नाम न जानाति मन्त्रशास्त्रकोविद आपदुद्धारबटुकभैरवस्तवराजापरपर्यायां श्रीमतीं भैरवनामावलिं, विशेषतः शाक्तास्तत्रापि चरणपाठानुजीविनो द्विजन्मानश्चाबालस्थविरम् ।

सेयं सकलागमविधायकगौरीसहायकश्रीकैलासनायकेन शिवेन सङ्कलितश्रुतिसारा जगति कृतप्रचारा साम्प्रतमपि बहुलसञ्चारा दर्शितचमत्कारा च सती सदाराधकानां मनोरथान्पूरयन्ती बहुधापद्गणाञ्चूर्णयन्ती सिद्धौषधिरिव रोगापहरणे, कल्पलतेव कामपूरणे, रविरश्मिरिव सुखकमलोल्लासकारिणी दुःखतमःप्रसारहारिणी च सकलागमशिखामणिरिव विराजतितरां सुतराम् ।

सेयं किलैकापि संविधिसाधनसिद्धा सती साधकानामनुकूलं कल्पलतेव फलति बहुविधैर्वाञ्छितफलैः, तथा हि ददाति धनं, प्रयच्छति विज्ञानं, हरति चाज्ञानं, वितरति कवित्वं, शमयति बहूपद्रवान्, मारयति रिपून्, मोहयति लोकानिष्टान्, वशयति दुराग्रहिणो बलवद्विरोधानपि, आकर्षति समुद्रान्तगान्परं विमुखानपि, उच्चाटयति सुदृढान् खनितमूलानपि, वाचालयति मूकान्, जडीकुरुते वाचस्पतिनोऽपि परं दुराशयान्, जनयति बन्ध्यास्वपि सुपुत्रान्, अपनयति भिषजामसाध्यानपि रोगान्, इत्यादि । तथैव प्रमीयते परमाप्ततमस्य निखिलनिगमागमप्रणेतुः पुरां विजेतुर्भगवतः श्रीशिवस्य वचोभिस्तत्र तत्र मन्त्रशास्त्रेषु, श्रूयते च गुरुपरम्परागतैर्मान्त्रिकतल्लजैस्तान्त्रिकप्रवरैरेवमेव ।

परमिदानीमीदृग्गुणगणवतीं सकलकामदुघां कामधेनुमिवाक्षरस्वरूपिणीमिमां न कोऽपि साधयति तत्तदागमोक्तेन विधिना, न च पठत्यादरतः प्रेमलक्षणया भक्त्यैव, प्रत्युत स्वोदरपूर्तिमात्रोद्देशेन यस्य कस्यचिदपि वणिजो वा शूद्रस्य गृहे विक्रीणन्तीव ब्राह्मणाः कतिपयैरेव पणैरिति दुरात्मनः कलिकालस्यैवायं महीयान्महिमेति कृकयापः ।

तदेतेन व्याप्तेऽस्मिन्सकलेऽपि भूतले नावशिष्टास्ते प्रत्यक्षचमत्कारा: परमोदारा: कलितलोकोपकारा: सिद्धा, उपदेष्टारो, गुरवस्तत्वावबोधका, मन्त्रशास्त्रिणस्तान्त्रिका:, सर्वतन्त्रस्वतन्त्रा:, स्वाधीनदैवतका, मरुतामपि स्तम्भकरा, मन्त्रत एवाधतिसकलनिगमागमा:, शतावधानादय: सुधिय: ।

न सन्ति सम्प्रति तादृशा: प्रथमन्तु। सन्ति च ये क्वचित्क्वचिदङ्गुलीमात्रगण्या मन्त्रशास्त्रतत्वाभिज्ञास्तेऽपि कलिकालकलाक्रान्तहृदया विद्यामिमामात्मनैव सह निनीषन्ति वैकुण्ठपुरं कैलासोपवनं वा ।

नोपदिशन्ति तत्वत इमान्ते कस्यचिदपिकृते निजापराधमिव दोषिण:, न प्रकटयितुं वाञ्छन्ति च स्वकार्यनिधिमिव कृपणा:, अन्विष्यन्ति च स्वसदृशानधिकारिणो विटा इव, समुपस्थिताय जिज्ञासवे विनीतायापि न दर्शयन्ति चौर्यधनमिव वञ्चका:, नाधिकारिणो यूयमिति परिभावयन्ति सुजनानपि, छलन्ति यत्किञ्चिदोतप्रोतमुपादिश्य सेवापरानपि च्छात्रान्, न च निर्दिशन्ति सम्यक्पद्धातिमेतस्या:, व्याख्यान्ति च तद्दुष्करतां जिज्ञासुपुरस्तात्, गूहन्ति च तत्सौकर्यम्, विस्तारयन्ति च विभीषिकाम्, किम्बहुना ते हि नोत्सहन्ते परेषामुत्कर्षं हन्त शिष्याणामपि, ततो विद्येयं तन्मुखावलोकनपराङ्मुखीव प्रतिदिनमधोऽध: प्रविशतीति भिद्यते हृदयम् ।

एवं शिथिलप्रायेऽपि मन्त्रविद्यातत्वे स्वकीयप्रभावाल्लोकेषु चमत्कुर्वदिदंद्वयमेवास्ते "श्रीदुर्गासप्तशती" आपदुद्धारबटुकभैरवनामावलिश्चेति । तत्रापि प्रधानतो जगद्रक्षार्थे जागर्ति भगवत्या: पराम्बायाश्चरित्रत्रयमेव सप्तशत्यपरपर्यायम् । तत्साधनाङ्गभूताचेयं नामावलिर्बटुकस्य, परमत्रायं विशेष: एनामन्तरा न हि काऽपि शाक्तानां सिद्धिरियं हि सर्वतन्त्रेषु प्रयोगस्यादावन्ते च पठनीयास्ति । अनया विहीनं विकलं सर्वसाधनं किम्बहूक्तेन सेयमपेक्ष्यते सर्वत्र, नास्यामपेक्ष्यते किञ्चिदप्यन्यदिति ।

अथ चैषा सप्तशत्यपेक्षया स्वल्पसमयसाध्या सरलपद्धति: सुकरप्रयोगा च । तदस्यां किञ्चिदुल्लेखनमुपयोगि भविष्यति लोकानामिति विचार्य, एतस्या: प्रत्येकं नाम स्तुवन्बहुविधेषु पद्येषु, तदर्थविवरणञ्च कुर्वन्, क्वचित्तदुपासनविधिं, क्वचित्तन्मन्त्रजपमाहात्म्यं, क्वचित्तत्पाठफलं, क्वचित्तत्प्रयोगमार्गं, क्वचित्तत्पटलक्रमं,

क्वचित्तत्साधकसामर्थ्यं क्वचित्तद्भक्तवात्सल्यं, क्वचित्तद्गुणवर्णनं, क्वचित्तद्बलिदान-विधानमित्यादि विषयान्यथामति समगुम्फयम् ।

तदेतद्विषयजातं प्रदर्शितानेकच्छन्दोऽभिधानैरष्टोत्तरशतैः पद्यैः काव्यस्वरूपे परिणमितं, किञ्चित्कार्यमुद्दिश्य चतुर्मासावधिकालं जयपुरप्रान्तवर्तिदहरोद्यानिकामधिवसता मयका । ततश्च सम्पूर्णे साध्ये समागत्य गृहान्, समीक्ष्य मन्त्रशास्त्राणि, समालोच्य चैतदुपासनामार्गान्, विचार्य चैतत्साधनरीतीः समापृच्छ्य च गुरुजनान् तेषाम्पद्यानां संक्षिप्तविवरणं चारचयम् ।

तदिह निबन्धे यथामति, यथाविचारं, यथाशक्ति, यथाविवेकं, यथाधीतं, यथाश्रुतं, यथादृष्टं, विरचिते विवृतेऽपि च सम्भवतो मानवधर्माणां क्वचिदस्मत्स्खलनं दृश्येत, तत्समाधेयं सोढव्यं च सरलहृदयैः सहृदयैः क्षमामण्डितैः पण्डितैः ।

यदि चैनं पठित्वा विचार्य च पाठकाः कमपि सन्तोषं प्रकटयिष्यन्ति, तदन्यदपि किञ्चित्पुस्तकमीदृग्विषयकं निर्माय पुनरुपायनीकरिष्यामि पाठकमहोदयानां सेवायाम् । सम्प्रति च यैरस्य विवरणकरणकाले स्वपूर्वजलिखितानि भैरवतन्त्राणि चान्यान्यपि मन्त्रशास्त्रपुस्तकानि द्रष्टुं मत्कृते दत्तानि, तेषामुदारहृदयानामुपकारस्मृतीं कुर्वन्नहमाशासे—यदेतत्पुस्तकं पठित्वा वरणपाठानुजीविनो ब्राह्मणा विशेषतो विपश्चितश्चास्तिकप्रवरा मन्त्रचमत्कृतिदिदृक्षवो मन्त्रसाधनजिज्ञासवश्चैतद्द्वारा प्रसादयन्तु बटुकं, कुर्वन्तु च महोपकारान्, साधयन्तु स्वाभिलषितानि, प्रभवन्तु यजमानकार्येभ्यः, दर्शयन्तु चमत्कारान्, अधरीकुर्वन्तु नास्तिकान्, लभन्तां च नाना काम्यसिद्धीरिति, ।

कालभैरवाष्टमी
मार्गशीर्षः
सन् १९८० विक्रमाब्दाः

पण्डितश्रीहरिशास्त्री दाधीचः
जयपुरस्थः ।

॥ श्रीः ॥

## "कविभूषण" पण्डितवरश्रीहरिशास्त्रिप्रणीतः

# सिद्धिस्तवः

स्वरचितटिप्पणविभूषितः ।

---

सुतपसां सुफलान्यचिरेण यो वितरितुं करुणावरुणालयः ।
बटुकभैरववेषमुपागतस्तमहमादिमहेश्वरमाश्रये ॥ १ ॥

सम्यग्विधया कृतानां तपसां त्वरया सम्प्रसीद्य सुफलानि दातुं करुणानिधिरादिमहेश्वरो बटुकरूपमुपागत इत्याशयः । तदुक्तं शिवागमसारे—मया बटुकरूपं हि धृतं सर्वसुखावहम् । अन्ये देवास्तु कालेन प्रसन्नाः सम्भवन्ति हि ॥ बटुकः सेवितः सद्यः प्रसीदति ध्रुवं शिवे ! इति । रुद्रयामलेऽपि—मया दुःखविनाशाय भैरवं रूपमाश्रितम् । भैरवः सेवितो येन तेनैव सेवितोऽस्म्यहम् ॥ योगिनीतन्त्रेऽपि—शिवःशिवोऽहं तु शिवो न भेदः कुत्रचित्सदा । इति ॥ १ ॥

लब्ध्वाऽऽदेशं सत्यसिद्धात्सुयोगे मूर्तं ब्रह्म श्रीबटुं मन्यमानः ।
नामावल्याःश्रीहरिःसत्कवीन्द्रो वक्ति स्तोत्रं शीघ्रसिद्धिप्रदायि ॥ २ ॥

चन्द्रतारानुकूले काले गुरोराज्ञामवाप्येत्याद्यचरणाशयः शेषं स्पष्टम् । एतद्रचनान्तकाल एव कश्चिच्चमत्कारोऽनुभूतः कविनेत्यनिर्वचनीयम् । तच्चैतत्पठन्तो निश्चलहृदयाः सहृदयाः साधकवरा देवकृपयाऽस्य सिद्धिप्रदत्वं स्वयमनुभविष्यन्तीति न विशेषं ब्रूमः ॥ २ ॥

सुवर्णमयवर्णिताऽऽकुटिलितान्तकान्तालकं
स्मितोदयविलासतो दरविकासिदन्तद्वयम् ।
कलंक्वणितकिङ्किणीचटुलपादविन्यासिनं
वराभयकरम्भजे बटुकभैरवं सिद्धये ॥ ३ ॥ भैरवः

इदम्प्रभृतिपद्येषु क्रमशो भैरवनामावलीस्थाष्टोत्तरशतनामानि प्रदर्शितानि प्रसिद्धानि च च्छन्दांसि नामनिर्देशम् । तेषां च कतिपयनाम्नामर्थस्यास्फुटतया विसं-ष्ठुलत्वात्सर्वसाधारणानां संस्कृतज्ञानाम्बालानामपि परिबोध आवश्यक इति तद्विवरणं कर्तुं संक्षेपतोऽस्मत्पद्याशयं विषमस्थलेषु प्रकटयितुं चेदं टिप्पणमारभ्यते मयका । तत्रादौ भैरवोभूतनाथश्चेति–क्रमप्राप्तस्य भैरवेति प्रथमस्य नाम्नो विवृतिः । भैरवः सकलं विश्वं भरति स भैरवः । तदुक्तं-काशीखण्डीयैकात्रिंशन्मितेऽध्याये "विश्वंभर्तुं-समर्थोऽसि भरणाद्भैरवःस्मृतः" इति । यद्वा भैरवो भयङ्करोमरुतादीनाम्परमात्मस्वरूप इति यावत् । तथा च श्रुतिः "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मा-दग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति । द्विधाप्यर्थो युक्तः पद्ये, स्वभक्तानां कृते तूपरि-वर्णनरीत्या मनोहारी सिद्धिदः पोषकश्च, दानवानां साधकद्वेषिणाञ्च कृते भयङ्कर इति । पद्येऽस्मिल्लीलाविग्रहधारिणो बटुकभैरवस्य बाल्यं वयः शब्दैः प्रकटितमिति दिक् ॥ ३ ॥

सुपूरयमुनालललहरिलोलितेन्दीवर-
स्फुरन्मधुपमालिकातुलितनीलनीलप्रभम् ।
नितान्तमृदु बालकाकृति मनोहरं भास्वरं
मुदा मनसि चिन्तये किमपि भूतनाथं महः ॥ ४ ॥

भूतनाथ

भूतानां नाथः भूतनाथः पृथिव्यादीनां भूतानां स्वामी अतएव महस्त्वेनस्तवनं निर्गुणपरिणामि । यद्वा भूतानां प्रमथादिकानां स्वामी भूतनाथः, ततो हि बटुकाकृत्या सगुणताविकासः पद्ये । यतो वा इमानि भूतानि जायन्ते यस्मिञ्जातानि जीवन्ती-त्यादिश्रुतिर्निर्दिष्टं भूतनाथनामकं मह एव सगुणतया बालकाकृति मनोहरं किमपी-त्यनिर्वचनीयं चिन्तय इति बटुकस्य ब्रह्मतयाराधनम्पद्याक्षरैरुदेति ॥ ४ ॥

विहाय सकलैषणास्तव पदं नु भूतात्मनो
नृणां कलयतान्द्रुतं स्फुरति सच्चिदानन्दता ।
स्मरन्ति यदि कामतस्त्वमुपगत्य तान्सत्वरं
ददास्यभिमतान्वरानपि करोषि पृथ्वीभुजः ॥ ५ ॥

भूतात्मा

भूतात्मा भूतानामात्मा अन्तर्यामी "एषआत्मान्तर्याम्यमृत" इति श्रुतेः । अत एव पद्यपूर्वार्द्धेन निरेषणानान्तदेकतानमानसानां सच्चिदानन्दतोल्लासः । यद्वा भूतेषु

भक्तजनेषु आत्मा चित्तमस्य स भूतात्मा, ततो हि पद्योत्तरभागेन सकामानां साधकानां वराभयदानेन पुष्टिः स्थाने सगुणतामापादयति। पृथ्वीनामकं छन्दः, जसौजसयला वसुग्रहयतिश्च पृथ्वीगुरुरितिलक्षणात् ॥ ५ ॥

श्रीमन्भैरव! भूतभावन! तव ध्यानैकतानाञ्जना-
नापद्घोरमहोर्मिमालिसलिलादानन्दतः सत्वरम्।
या नौका महती दृढा मरुदनापेक्षिण्यवार्योज्जवा
भूत्वा तारयते जपामि तव तां नामावलीमुज्ज्वलाम् ॥ ६

भूतभावनः भूतानि भावयतीति व्युत्पन्नं नाम, नन्द्यादिल्वाण्यन्ताद्भवतेर्ल्यौ सति परमं ब्रह्म इति यावत्, अत एव पद्ये नामोपासनम्। अयमाशयः, अयि भूतभावन! तव नामावलिर्महती दृढा, मरुदनापेक्षिणी अवार्यजवा नौका भूत्वा साधकानापन्महाम्बुधेरानन्दत उत्तारयतीति त्वत्तवस्यापदुद्धारतानुगुण्यम् ॥ ६ ॥

या दुर्मोहमहान्धकारहरणे विज्ञानभानुप्रभा
या संसारकुरोगदूरकरणे दिव्या च सिद्धौषधिः।
या नित्यं जपतां मनोरथफलापूराय चिन्तामणिः
हे क्षेत्रज्ञ! तव प्रसादनकृते नामावलीं ताम्ब्रुवे ॥ ७ ॥

क्षेत्रज्ञः क्षेत्रं शरीरं दृश्यत्वेन जानाति स तज्ज्ञः, तदेव गीतासु हरिराह "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते, एतद्यो वेत्ति तम्प्राहुः क्षेत्रज्ञ इति तद्विदः" अ. १३ श्लो. १। तथैव ब्रह्मपुराणेऽपि "क्षेत्राख्यानि शरीराणि तेषांश्चैव यथासुखम्, आत्मानं वेत्ति संयोगादतःक्षेत्रज्ञ उच्यते" इति। पद्याशयस्तु हे क्षेत्रज्ञ! या तवनामावली मोहान्धकारापनोदने विज्ञानभानुरश्मिर्भवति या च संसाररोगदूरीकरणे दिव्या सिद्धाचौषधिर्भवति, या च जापकानां मनोरथान्पूरयितुं चिन्तामणिर्भवति तामहम्पठामि तदियमुपर्युक्तगुणवती ममापि भवत्विति ॥ ७ ॥

दैत्यौघार्तपुरन्दरप्रभृतिभिर्वृन्दारकाणाङ्गणैः
कल्पं कल्पमभीष्टसाधनकृते ध्यातो नुतो यो नतः।
साह्यं यच्छति तूर्णमेव भगवान्स क्षेत्रपालो मम
सर्वारातिगजव्रजे प्रकुरुताच्छार्दूलविक्रीडितम् ॥ ८ ॥

क्षेत्रपालः क्षेत्रं (इन्द्रियादिधृतिपर्यन्तानां समूहरूपं गीतासु भगवदुक्तं) शरीरं केदारं वा पालयति स क्षेत्रपालः सर्वकर्मसु पूर्वाराध्य देवइत्यर्थः। सर्वकर्मसु पूर्वाराध्यत्वं चास्य प्रयोगसारे स्फुटम् "क्षेत्रपालमसंपूज्य कर्म यः कुरुते क्वचित्, तस्य कर्मफलं हन्ति क्षेत्रपालो न संशय" इति। पद्ये तु पुरन्दरादिभिरमरगणैरपि समुपस्थितासु दानवबाधासु बटुकस्य भगवतो ध्येयत्वं नम्यत्वं च प्रदर्श्य तस्यैव देवोपकारकारिता प्रकाशिता। तथैव भैरवतन्त्रेऽपि वर्णितं शिवेन गौरीम्प्रति–"देवासुररणे घोरे देवानामुपकारकम्, प्रकाशितं मया देवि तन्त्रे भैरवदीपके" इति। अपि च रामकृष्णादयोऽप्येनमाराधयामासुरिति रुद्रयामलीयाशीसङ्क्ोक्तभैरवसहस्रनामप्रकरणान्तपद्यैः स्फुटीभवति यथाहि––"इदं स्तोत्रं च रुद्रेण रामस्यापि मुखेऽर्पितम्, रामेण कथितं भ्रात्रे लक्ष्मणाय महात्मने। ततो दुर्वाससे प्राप्तं तेनैवोक्तन्तु पाण्डवे, पाण्डवोप्यब्रवीत्कृष्णं कृष्णेनेह प्रकीर्तितम्, अस्य स्तोत्रस्य माहात्म्यं रामो जानाति तत्वतः रामोऽपिराज्यं संप्राप्तो ह्यस्य स्तोत्रस्य पाठतः। पाण्डवोऽपि तथा राज्यं सम्प्राप्तो भैरवस्य च, प्रसादादिति शेषः। पद्यस्य तु दैत्यार्तिदैर्ध्यातोनुतो यो बटुर्यथा देवानां साह्यं करोति तद्वन्ममापि रिपुगजव्रजेऽयं भगवञ्छार्दूलइव विक्रमंकुरुतादिति संक्षेपः शार्दूलविक्रीडितं वृत्तम् सूर्याश्वैर्मसजस्ततश्चगुरवः शार्दूलविक्रीडितम् इति तल्लक्षणात्॥ ८॥

योगक्षेमकृते तदेकपरमा हित्वा त्वदीयम्पदं
प्रायासान्बहुधा वहन्ति पुरुषास्ते वै विमूढाः परम्।
नूनं ते न विजानते तव महामाहात्म्यमैश्वर्यदं
यत्सर्वैः प्रतियज्ञपूज्यचरणस्त्वं क्षेत्रदो विश्रुतः॥ ९॥

क्षेत्रदः "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः," भगेचेति विश्वकोषोक्तपदार्थानां दाता देवः। तस्मात्पद्ये प्रतियज्ञं सर्वैः पूज्यत्वमस्यप्रदर्श्य चैनत्पदमपहायान्यतो हिण्डमानान्मानवान्प्रसवहेलनं संघटते॥ ९॥

दक्षे हस्तारविन्दे तडिदधिकरुचिश्चन्द्रहासं द्विधारं
वामे विभ्रँस्त्रिशूलाँस्त्रिविधमिव रवेर्भागमादीप्यमानम्।
मालामादाय मन्त्रं तव किल जपतो मेऽन्तरायानरींश्च
हत्वा स्वक्षत्रियाख्यां सफलय च नतम्पाहि मांस्रग्धरात्मन्॥ १०

क्षत्रियः, प्रहारादिविघ्नेभ्यो रक्षक इत्यर्थः । क्षतात् त्रायते इति क्षत्रः क्षदेष्ट्रन् क्षत्र एव क्षत्रियः । क्षत्राद्घ इति घः, तत आयनेयीति घस्येयादेशे सिद्धं नाम । नामार्थानुसारमेव पद्ये त्वं खड्गं त्रिशूलं दधानो मेऽन्तरायानरीनपि हत्वा स्वां क्षत्रियाभिधां सफलीकुर्वित्यभ्यर्थना । स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् इति तल्लक्षणात् ।

यन्मूर्धा द्यौश्च वह्निर्वदनमिनविधू दृष्टिराशाः श्रुती च
श्वासा वेदाश्च नासामरुदपि विमलम्व्योम शुद्धा शिरोधिः ।
धर्मो हृद्ब्रह्म चात्मा जलनिधिरुदरं लोमजालं च वृक्षाः
भूः पादौ यस्य रूपं बटुकमपि विराड्भैरवः सोऽस्तु भूत्यै ११

विराट् विशेषेण राजते स विराट्, राजतेः क्विप् । श्रुत्यादिषूपवर्णितोजगदादिपुरुष इत्यर्थः । तथा च श्रुतिः ततो विराडजायत इति, पुरुष एवेदं यद्भूतं यच्च भाव्यम् इति च । पद्येऽपि बटुकस्य पुराणानुसारमेव विराड्रूपवर्णनं गुम्फितं, यस्य द्युप्रभृतयो मूर्धाद्यवयवाः स विराड्रूपो बटुर्मे भूत्यै भवत्विति संक्षेपः ।

स्वनामनिष्ठान्बहुवैभवैषिणो विलोक्य देवान्करुणाक्तया दृशा ।
अदात्समृद्धिं तृणवद्बभूव यः श्मशानवासी स पुनातु भैरवः ॥१२॥

श्मशानवासी, श्मशाने वसति तच्छीलः शिव इति यावत् । शिवस्वरूपस्याप्यस्य बटोः श्मशानवासे हेतुरुत्प्रेक्षितोऽत्र पद्ये विभवकामनया देवानां तन्नामजपपरायणत्वमिति । पुरा कल्पे कश्चिन्महादेवेनाप्येवं भ्रूसङ्केतमात्रेण सर्वाः सम्पदो देवेभ्यो वितीर्णाः, तथा हि पुष्पदन्तः—सुरास्तान्तामृद्धिं दधाति तु भवद्भ्रूप्रणिहितां नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति" इति । एतेन परम्वदान्योऽयं भगवान्बटुरिति स्फुरति ॥ १२ ॥

परानुरक्त्या बलिदानदीपतःसन्तोष्य मांसाशिनमानमन्ति ये ।
भवन्ति ते ज्ञानघनाः शिवोपमास्तदीयवंशस्थमनन्तगौरवम् ॥१३॥

मांसाशी, मांसमश्नातीति मांसाशी, अश्नातेर्णिनिः। "राजसो मांसरक्ताढ्यः"

इति राजसबलिदानानुकूलो नामार्थ, इति मांसाशिनो बलिदानदीपदानाभ्यां सन्तोषणमुक्त्वा तथा सन्तोषकारिणां शिवोपमत्वम्पद्ये गुम्फितम् । तथा हि भैरवतन्त्रेऽप्युक्तं-भैरवाराधनासक्तो, योभवेत्साधकोत्तमः। सदाशिवः स विज्ञेयो, भैरवेणेतिभाषितम् इति । वंशस्थवृत्तम्-जतौ तु वंशस्थमुदीरितंजरौ, इति लक्षणात् ॥१४॥

असच्च हेयं न जगत्सु किञ्चिद् ध्रुवं स्वभृत्यानिति वोपदेष्टुम् ।
शिवोऽपि योऽभूत्किल खर्पराशी स भैरवो मे भवतु प्रसन्नः ॥ १४ ॥

खर्पराशी, खर्परे भिक्षापात्रभूते कपाले ( ब्रह्मण इति शेषः ) अश्नाति तच्छीलः खर्पराशी । बटुकस्य ब्रह्मकपाले भिक्षणं भक्षणं च शिवपुराणे प्रसिद्धं, तथा हि तत्र-'ततस्तु भैरवः कोपाद्ब्रह्मणःपञ्चमंशिरः। चिच्छेदसुमहाटोपः करजाग्रेण भीषण' इत्याद्युपक्रम्य, करस्थं मत्कपालन्ते भिक्षापात्रम्भवत्वलम् इति विरञ्चिवचनम् । पद्ये तु खर्पराशित्वे समत्वदृष्टिकोपदेशो हेतुत्वेनोत्प्रेक्षितो, वेति इववाचकशब्देन "इववद्वा यथा शब्दौ" इति दण्डिवाक्यात् ॥ १४ ॥

स्वसाधनानिष्ठसुसाधकानां विनाशितुं सन्ततकामविघ्नान् ।
उपेन्द्रवज्रातिकठोरवीर्यं स्मरान्तकृत्त्वं क्षणतः करोषि ॥ १५ ॥

स्मरान्तकृत् स्मरस्य कामस्य अन्तं नाशं कृतवान् करोतीति वा स्मरान्तकृत्। पद्ये बटुक आराधयतां साधकानां कामजनितोपप्लवविनाशपूर्वकमूर्ध्वरेतस्त्वं करोतीति प्रदर्शितमुपेन्द्रवज्रातिकठोरवीर्यमिति । अस्य शिवस्वरूपत्वादुक्तार्थसङ्गतिः । उपेन्द्रवज्रावृत्तम् "उपेन्द्रवज्रा जतजास्ततो गौ" इति लक्षणात् ॥ १५ ॥

रक्तान्स्वभक्तान्परिपालयत्यतो भक्तद्विषां वा रुधिरस्य पानतः ।
यो रक्तपख्यातिमुपागतःपरां वीरो बटुर्मे भवतात्स भूतये ॥ १६ ॥

रक्तपः, रक्तान्भक्तान्पाति रक्षति, अपि च रक्तं भक्तद्विषां दानवानां पिबति सः । पा पाने रक्षणे च । अर्थद्वयमपि पद्ये प्रदर्शितम् । भक्तद्विषां शोणितपानकरणे तु राजसबलिदानमन्त्र एव लिङ्गं यथा—"शत्रुपक्षस्य रुधिरं, पिशितं च दिने दिने।

भक्षय श्वगणैः सार्कं, सारमेयसमन्वित" इति। भक्तानां रक्षणेऽपि मानं मेरुतन्त्रे–"अस्मात्परतरा रक्षा नास्ति" इति ॥ १६ ॥

**यःपानपाय प्रणतोऽतिभक्तितः सोत्सीधुधारं बलिमर्पयेन्निशि ।**
**तस्याङ्घ्रियुग्मं जितसिद्धिसञ्चितेराभूमिपात्पूजयतीन्द्रवंशकम् १७**

पानपः, पानं पात्रं मद्यगृहं वा पाति रक्षति स पानपः। शुण्डा पानं मदस्थानमित्यमरः। यद्वा पानमिति सुरोपलक्षणं तां पिबतीति सः। एतदनुसृत्यैव पद्ये ससीधुधारं बलिविधानमुपयुज्यते। काम्यसिद्ध्यर्थं राजसबलिदाने सीधुरावश्यक इति निर्वाणतन्त्रे प्रोक्तं, यथा–"सम्पूज्य स्थापयेत्तत्र, सामिषान्नं सुधान्वितम्" इति। एवञ्च पानपाय सीधुयुक्तो युक्त एव बलिः। तथा कुर्वतां जितसिद्धिसमूहानां पादद्वन्द्वं "तस्य पादाम्बुजद्वन्द्वं, राज्ञां मुकुटभूषणम्। दुर्लभां लभते सिद्धिं, सर्वदेवनमस्कृताम्" इत्याद्यनुसारं जगति राजभिः, परं दिवीन्द्राद्यैश्च देवैः पूज्यत इति पद्याशयः। इन्द्रवंशानाम वृत्तम् "इन्द्रवंशा तौ जरौ" इति लक्षणात् (पिं. सू.)॥ १७॥

**दत्तेऽभिलाषं क्षपयत्यरातीन् हन्तीन्द्रवज्रातिकठोरविघ्नान् ।**
**दत्वा विवेकं सुयशस्तनोति सिद्धो बटुः साधयते न किं किम् १८**

सिद्धः, अनादित्वात्। षिधगत्यामितिधातोः कर्तरिक्तः। नित्यनिष्पन्नरूप इत्यर्थः। सर्वमप्यभिलाषम्पिपर्त्ययम्बटुरित्याशयः। इन्द्रवज्राख्यं वृत्तम्, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति लक्षणात्॥ १८॥

**खलस्य पापाकुलचेतसोऽपि निष्किञ्चनस्याप्युपजातिगस्य ।**
**त्वां ध्यायतस्त्वं परमानुरागाद् द्रुतं मनोवाञ्छितसिद्धिदोऽसि १९**

सिद्धिदः, सिद्धीरणिमाद्या ददातीति सः। यद्वा सिद्धिं मुक्तिं त्रैवर्गिकीं वा ददातीति सः। एतेन पद्येन, जात्यादिभेदमपहाय सर्वेषां परमानुरागपूर्वं ध्यायतां सर्वाभीष्टलाभः सूचितः। स हि विश्वसारतन्त्रीय भैरवपटले, यथा—"अकुलीनः कुलीनो वा, बुधो वा प्यबुधः पुमान्। पूजया बलिदानेन, नाना सिद्धीरवाप्नुयात्" इति। खलादीनामपि त्वमीदृक् सिद्धिप्रद स्तर्हि त्वां ध्यायतां विदुषामपि

कुलीनानां च कृते पुनः किमु वक्तव्यम् । उपजाति वृत्तम्—"अनन्तरोदीरित-लक्ष्मभाजौ पादौ यदीयावुपजातयस्ता" इति लक्षणात् ॥ १९ ॥

चितोपरि स्थितस्त्रिधा विभूतिरेखितालिको
जपन्मनुं ददाति यो बलिञ्च पुंस्कपालके ।
त्वमष्टसिद्धिसेवितः करोषि मूर्ध्नि तं नरं
सुसिद्धिकामिनीकरावधूतपञ्चचामरम् ॥ २० ॥

सिद्धिसेवितः, सिद्धिभिरष्टाभिः सेवितः । अणिमादयः सिद्धयः स्तवैवाधीना इति तात्पर्यम् । पद्ये चाष्टसिद्धिसेवितस्त्वमुपर्युक्तदिशा बलिदानपूजनमन्त्रजपैः सुप्रीतः सन् भक्तानपि सिद्धिसेवितान्करोषीतिवर्णनं नामार्थानुगुणम् । चितासनस्थो भूत्वा तद्भस्मनैव कृततिलको यः पुंस्कपाले समन्त्रजपं बलिं बटुकाय निवेदयाति स ईदृशो भवतीति तन्त्रेषु कपाले बलिदानं शीघ्रसिद्धिकरम्प्रोक्तम् । पञ्चचामरं छन्दः—"जरौ जरौ जगाविदम्वदन्ति पञ्चचामरम्" इति लक्षणात् ॥ २० ॥

कङ्काल! तेऽङ्घ्रिकमलं कलयँस्त्वदीय-
तेजोवृतां मनसि पश्यति रोदसी यः ।
रूपं वसन्ततिलकायितमाशु लब्ध्वा
भूत्वा स भूपरिवृढो भवतामुपैति ॥ २१ ॥

कङ्कालः, कं शिरो ब्रह्मणः कालयति खण्डयाति स कङ्कालः । यद्वा कं जलं कालयति शोषयति (तृतीयनेत्राग्निनेति शेषः) स कङ्काल इति केरलदेशीयसदाशिव शास्त्रिणः । कं शिरोम्बुनोरित्यमरः । कलिः कामधुगिति शाब्दिका । ब्रह्मणोमस्तक खण्डनविषये प्रमाणं मेरुतन्त्रे द्वात्रिंशप्रकाशे यथा—"इति श्रुत्वा ब्रह्मवचो, धर्मसंस्थापनाय च । युगत्रये यदा जातः, क्रोधसंरक्तलोचनः । अवज्ञां वीक्ष्य च मया, प्रखरेण नखेन च । शिरो निपातितं धातुः, कराङ्गुल्या धरातले । तन्मुखात्पञ्चमो बेदो, मम देहे लयं गत" इत्यादि । एतद्विषयिणी कथा शिवपुराणे विस्तरतो लभ्यते संक्षेपत

स्त्वस्माभिः खर्पराशीतिनामनिर्वचनेऽनुपदं प्रदर्शिता । पद्ये—यस्तव चरणकमलं ध्यायन् भवदीयतेजोभरिते रोदसी पश्यति स ईदृशो रूपवान् भूपरिबृढो भूत्वा शिवतां प्राप्नोतीत्यर्थः । वसन्तस्य तिलकायितं कामस्येव सौन्दर्यं प्राप्येत्यर्थः । तदुक्तं भैरवकल्पे—"प्रीत्या च परयोपेतो, बटुकाराधको नरः । इहैव धनवाञ्छ्रीमानशौर्यवाग्मिप्रियदर्शन इति" । वसन्ततिलकं वृत्तम्—"उक्ता वसन्ततिलका तभजाजगौग" इति तल्लक्षणोपलम्भात ॥ २१ ॥

तव ध्यानाधीना मनुजपनिलीनाः सुमनसः
स्वपादौ यद्दैवस्वतमणिकिरीटे शिखरिणि ।
सलीलं चाश्रान्तं निदधति विचित्रं न तदिदं
यतस्तेषां स्वामी त्वमसि भगवन्कालशमनः ॥ २२ ॥

कालशमनः, कालं मृत्युं शमयति स कालशमनः । यद्वा कालः सर्वाधाररूपोऽखिलकार्यकारणमादिसादिक्रियासमूहरूपः । तथाचोक्तम्—"अनादिनिधनः कालो, रुद्रः सङ्कर्षणःस्मृतः । कलनात्सर्वभूतानां, स कालः परिकीर्तितः" इत्येतादृशे काले शं सुखम् अनति प्राणिति स कालशमनः । अन प्राणने इति धातुः । बटुकभैरवस्य कालशमनत्वे योगवाशिष्ठस्य निर्वाणप्रकरणस्थो वाल्मीकिः प्रमाणं, यथा—महाप्रलये एक एव भैरवो भैरव्या सह नृत्यतीति । पद्ये तु कालशमनस्य साधकानां स्वच्छन्दतः कालमुकुटे चरणधरणं युक्तमेव, यतस्तेषां स्वामी कालशमनोऽस्तीति चरितार्थता । शिखरिणी वृत्तम्—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ २२ ॥

तव मनुपुटका यो नामलेखां निशि जपति विलोमाच्चानुलोमात् ।
स हि पुरुषवरस्तेऽद्वैतमाप्तो भुवि भवति कलाकाष्ठातनुः स्वम् ॥ २३ ॥

कलाकाष्ठातनुः, कलानां काष्ठा परमोत्कर्षः स तनौ यस्य स कलाकाष्ठातनुः । काष्ठोत्कर्षे स्थितौ दिशीत्यमरः । यथा त्वं कलाकाष्ठातनुरसि तथा तव नामावलीं निशि लोमविलोमरीत्या जपति सोऽपि भवतीति महत्त्वे माहात्म्यमितिभावार्थः । पुटनामकं वृत्तं—"पुटो नौ मयौ वसुसमुद्राः" इति पिङ्गलसूत्रेषु तल्लक्षणोपलम्भात ॥ २३ ॥

अवदधति मनो ये शुद्धविद्यैककामा-
स्त्वयि भगवति नित्यं नामजापैकतानाः ।
सततममृतकल्पं माधुरीणान्धुरीणं
कलयसि किल तेषां त्वङ्कविःस्वं कवित्वम् ॥ २४ ॥

कविः, सर्वज्ञ; क्रान्तदर्शी वा, तदुक्तं गीतासु ८ अध्याये कविम्पुराणमनुशासितारमिति । तत्र कविः क्रान्तदर्शी सर्वज्ञ इति श्रीशङ्कराचार्याः । सर्वविद्यानिर्माता, इति श्रीधरः । पद्ये विद्यैककामनया त्वान्ध्यायतां त्वं मधुरभणितिप्रणेतृत्वं सर्वज्ञत्वञ्च कलयसीति भावः । तदेवोक्तं भैरवकल्पे—"साधकस्याचिरादेव, कवित्वं सम्प्रजायते । गङ्गाप्रवाहवद्वाणी, भवसेत्र न संशय" इति ॥ २४ ॥

पितृभवननिवासात्सर्वभूताधिपत्या-
च्छिरसि धृतविधुत्वात्सर्वतः शङ्करत्वात् ।
भुजगपरिवृतत्वान्मुण्डकोन्मालिनीयं
प्रथयति तव मूर्तिर्हीश्वरं त्वां त्रिनेत्रम् ॥ २५ ॥

त्रिनेत्रः, त्रीणि नेत्राणि (रविचन्द्रवह्निरूपाणि) यस्य स त्रिनेत्रः । शिवस्वरूपत्वादस्येति भावः । पद्ये—पितृभवनेति हेतुपदानि । मुण्डकानामुत्कृष्टा माला यस्यां सा ते तनुस्त्रिनेत्रन्त्वामीश्वरामिति प्रथयतीति स्पष्टम् । मालिनी नाम वृत्तम्—ननमयययुतेयं, मालिनी भोगिलोकैरितितल्लक्षणात् ॥ २५ ॥

गिरिषु सरिति गेहे मन्दिरे कन्दरे वा
पुरि सरसि पितृणाङ्काननने वा वने वा ।
कथमपि भजतस्त्वाँस्त्वंदयापूर्णदृष्ट्या
प्रभवसि बहुनेत्रः प्रेक्षितुं तुल्यकालम् ॥ २६ ॥

बहुनेत्रः, बहूनि नेत्राणि यस्य सः । परमपुरुष इत्यर्थः । सहस्राक्षः सहस्रपादिति श्रुतेः । पद्ये च बहुत्र स्थितिमतो बहुप्रकारैस्त्वान्ध्यायतो मानवान्युगपत्करुणापूर्णवीक्षणैः कृतार्थयसीतिभावः । तदेतदानुगुण्यं नाम्न इति ॥ २६ ॥

तव पदं हृदि भावयतां नृणामरिकुलन्दुरितानि रुजो भयम् ।
द्रुतबिलम्बितमुद्दलितुम्भवान्भवति भैरव ! पिङ्गललोचनः ॥२७॥

पिङ्गललोचनः, पिङ्गलानि कमलपरागवद्वर्णानि लोचनानि यस्य सः । पिङ्गलः पद्मधूलिवदितिशब्दार्णवः । पद्ये च भक्तानां रिपुदुरितरोगभीतिकुलानि दलितुं त्वं पिङ्गललोचनोभवसीति सर्वमर्थवत् । व्यज्यत उत्प्रेक्षणम् । द्रुतं बिलम्बितश्चेति क्रियाविशेषणं बोध्यम् यावद्भावनया यावदाराधनसदृशमिति फलितमवधार्यम् । द्रुतविलम्बितं वृत्तम्—द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ २७ ॥

यैर्यैः सिद्धैर्नित्यमाराध्यसे त्वं प्रीतस्तेषां वाञ्छितार्थं ददानः ।
कालेऽप्याप्तं मृत्युमाहन्तुकामो नामोल्लेखे भ्राजसे शूलपाणिः २८

शूलपाणिः स्पष्टोर्थः । आराधयतां मनोरथम्पूरयँस्तदन्तरायभूतं मृत्युमप्याहन्तुकामो (विशेषकामनया विशेषोपचारार्चनाद्यैः) भवाञ्छूलपाणिर्भवतीति पद्यार्थसंक्षेपः ॥ २८ ॥

देवेन्द्राद्यैर्दानवानाम्बधार्थं नानामन्त्रैः पूजिता प्रार्थिता च ।
दर्पोत्फुल्लं दैत्यजालन्दलन्ती रौद्री मूर्तिः पातु माङ्खड्गपाणिः ॥२९॥

खड्गपाणिः, खड्गोऽसिः पाणौ यस्य सः । दैत्यजालदलनार्थमिन्द्रादिदेवैरपि पूजनप्रार्थनादिकमस्य बटोर्भगवतोऽक्रियत एवेति पद्याशयः । तदेव साधयति रुद्रयामलीयभैरवध्यानवाक्यम्—"आनम्रसर्वगीर्वाणशिरोभृङ्गसमन्वितम् । भैरवस्य पदाम्भोजमिति" । अपि च, देवासुररणे घोरे, देवानामुपकारकमिति ॥ २९ ॥

देहं त्यक्त्वा त्वत्स्वरूपङ्गतानां सद्भक्तानामन्त्रकैः शालिनीयम् ।
कङ्कालिंस्ते मूर्तिरेषा मनोज्ञा प्राख्यातीवोद्भक्तवात्सल्यमत्र ॥३०॥

कङ्काली, कङ्कालं त्वङ्मासरहितनरशरीरान्त्रपञ्जरमस्यास्ति स कङ्काली तवसम्बुद्धौ हे कङ्कालिन् ! । तामसस्वरूपध्यानेषु भैरवस्य ज्वलच्छवकङ्कालादिधारणम्बहुत्र वर्णितम् । तदेव पद्ये भक्तिविशेषोल्लासप्रदर्शनपूर्वकमुपस्थापितं वात्सल्यम्ब-

हुलयति भक्तानाम्। तत्स्वरूपगामित्वं च तदनन्यतया भवत्येव साधकानाम्। तथा च गीतासु ८ अध्याये—"यं यं वाऽपि स्मरन्भावं, त्यजत्यन्ते कलेवरम्। तन्तमेवैति कौन्तेय! सदा तद्भावभावित" इति। अत्र भावमिति देवताविशेषमिति श्रीशङ्कराचार्याः। एवमेव नीलकण्ठादयष्टीकाकृतः। अपि च स हि महादेवं भावयँस्तत्सारूप्यं देहान्तरं विनैव प्राप्त इति योगशास्त्रे प्रसिद्धं नन्दिकेश्वरस्य वृत्तान्तम्। अथवा (तत्स्वरूपं गतानामितिपाठे) तत्पदस्वरूपं ब्रह्मभावं गतानामिति चाशयः। तदुक्तो बटुकमाराधयतां मुक्तिलाभो बटुककल्पे—"बटुकाख्या परा सूक्ष्मा, सद्यः प्रत्ययकारिका। कलौ तु सिद्धिदा देवि, भुक्तिमुक्ति फलप्रदेति"। तथा च मेरुतन्त्रेऽपि—"सात्विकस्त्वं काशिकायां, मुक्तिमार्गप्रदो भवेति" शालिनी वृत्तम्—शालिन्युक्ता म्तौतगौ गोऽब्धिलोकैरितितल्लक्षणात्॥ ३०॥

हविरतिविमलेऽनले प्रजुह्वन्
यजतितरामयि धूम्रलोचन! त्वाम्।
स पुरुष इह धूम्रलोचनोऽपि
विलसति वै झटिति त्रिकालदर्शी॥ ३१॥

धूम्रलोचनः, धूम्राणि कृष्णलोहितवर्णानि लोचनानि यस्य सः। "धूम्रधूमलौ कृष्णलोहिते" इत्यमरसिंहः। पद्याशयस्तु हे धूम्रलोचन! त्वदर्थं हवनं कुर्वन् धूम्रलोचनोऽपि (होमाग्निधूमजालाकुलाक्षोऽपीतिभावः, कृष्णलोहितत्वं धूमतो नेत्राणां भवत्येव दर्शनाकुलत्वञ्चापि) झटिति त्रिकालदर्शी भवतीति। इयत्ते यजनमाहात्म्यमितिनिष्कर्षः। अत्र धूम्रलोचनस्य त्रिकालदर्शित्वेन विरोधो, देवदत्तदिव्यदृष्टित्वेन तदाभासश्चेतिदिक्॥ ३१॥

सुविमलतटिनीतटश्मशाने
द्रुतमुपयातशवोपरि स्थितो यः।
निशि तव मनुकं जपेदभीरुः
स किल जनो भगवान्भवानिव स्यात्॥ ३२॥

अभीरुर्भयरहितः। "भियक्रुक्लुकनौ" इति भीधातोः क्रुः। शवोपरि पुण्य-

नदीतीरश्मशानादिस्थानेषु भैरवाराधनं शीघ्रसिद्धिप्रदमितितन्त्रम् । अस्य शिवत्वाद्घोरपरमप्येतदवधार्यम् । ते हि तत्सिद्धाः कर्तुमकर्तुमन्यथाकर्तुं प्रभवो भवन्तीति तन्त्राणि दृष्ट्वा भगवानिति पदेन सर्वसामर्थ्यं प्रदर्शितम् ॥ ३२ ॥

**तव पदयुगलम्परानुरागात्सुरभिपरारुणपुष्पबिल्वपत्रैः ।**
**यजति य इह भैरवीयनाथ! सुरललनाः किल तत्पदे लसन्ति ॥ ३३**

भैरवीनाथः, भैरवी आनन्दभैरवी नाम स्वकीयाशक्तिस्तन्नाथस्तत्स्वामी । कर्णिकारादिरक्तपुष्पप्रियत्वं बटुकस्य स्फुटमेव । यस्तव चरणं रक्तपुष्पबिल्वपत्रादिभिरर्चति, तच्चरणे, गृहे वा "पदम्व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरोक्तेः । सुरललना विलसन्ति । देवाङ्गनाविहारयोग्यवैभववान् भवति स पूजक इति निष्कर्षः । पद्ये चात्र गायत्र्यामिव "इयादिपूरणः" इतिसूत्रानुसारं बटुकनाम्नामपि महेश्वरेण (वेदेभ्योनिःसार्य) सङ्कलितत्वेनापौरुषेयतया वेदत्वमनुसन्धाय, भैरवीनाथ इति पदस्य वर्णानां, क्रमेणाहते पुष्पिताग्राछन्दस्यनाधेयतयार्थाभेदजनकेनेयपदेन छन्दः पादपूरणं न दोषाय ॥ ३३ ॥

**रचयसि सकलं किल प्रपञ्चं त्वमवसि च स्वयमेव भूतजातम् ।**
**पुनरपि पिबसीव चान्तकाले तत इह भूतप नाम ते प्रसिद्धम् ॥ ३४ ॥**

भूतपः, भूतानि प्राणिवर्गान्पाति रक्षति स भूतपः । यद्वा भूतानि प्रलयकाले पिबति संहरते सः । अर्थद्वयमेव वर्णनीयतया मध्यमपादद्वये परिणमितस्तत एव नामानुगुण्यम् । शिवत्वादादिपुरुषत्वानुसन्धानादस्य जगदुत्पादकत्वमपि निर्बाधम् । उत्पादितवस्तुन एव रक्षासम्भवो नान्यथेतिप्रत्यक्षत्वात् पूर्वमुत्पाद्य पश्चात्पासि पिबसीति योज्यम् । एवं हि जगदुत्पत्तिरक्षणेऽनिर्दिश्यैव संहारमात्रात् ते समाकृष्येते ब्रह्मोत्तरखण्डेऽपि—"कल्पान्तकाले भुवनानि दग्ध्वा, सर्वाणि यो नृत्यति भूरिलीलः" इति । भूरिलील इतिपदेन लीलाबाहुल्यमाधीयते तच्च उत्पादनं रक्षणं च । लीलयैव सृजसि पासि संहरस इति निष्कर्षः ॥ ३४ ॥

**सकलमपि विहाय यः प्रपञ्चं प्रजपति नाम तवैव भक्तिपूर्वम् ।**
**तमिह सपदि योगिनीपतिस्त्वं कलयसि राजसुयोगभोगयुक्तम् ३५**

योगिनीपतिः, चतुःषष्टियोगिनीनाम्पतिः। तवैवादेशपरायणा योगिन्य इत्यर्थः। सर्वप्रपञ्चं विहाय भक्तिपूर्वं चित्तैकाग्र्येण तव नाम जपतां सपदि राजयोगो राजभोगश्च सिद्ध्यतीति पद्याशयः। राजयोगोत्र राजसो योगोऽणिमादिसिद्धिमत्त्वं योगद्वारा। राजभोगश्च प्रसिद्धो राज्ञामिव वैभवभोगवत्त्वम् ॥ ३५ ॥

**अयि धनद! तवांघ्रिपद्मयुग्मे प्रणमति नाम जपन्नकिञ्चनो यः।**
**तदधिभवनमेत्य कामदोग्ध्री विलसति कल्पलता सुपुष्पिताग्रा ३६**

धनन्ददाति स धनदः कुबेरस्वरूपो वा। एतदर्थानुसारमेव माहात्म्यवर्णनादभिप्रायानुगुण्यम्। अकिञ्चनानां नामावलीं जपतामल्पकालत एव बहुधनिकत्वं स्तवराज एव स्फुटम् यथा—"धनार्थी च सुतार्थी च, दारार्थी यस्तु मानवः। जपेन्मासत्रयं देवि, वारमेकन्तथा निशि। धनं पुत्रं तथा दारान्प्राप्नुयान्नात्रसंशय" इति। शिवागमसारेऽपि स्तवराजप्रयोगविधाने—"शनौ च प्रातरुत्थाय, दशावृत्तिं चरेदिह। होमादिकं च सम्पाद्य, षण्मासैरतुलां श्रियम्" लभते इति शेषः। अथवा स्वर्णाकर्षणभैरवो धनदाने प्रसिद्धः स चास्यैवोपासनाभेद इतिकृत्वायमेव धनदः स्पष्टः। अर्थात् यस्तव नामावलीं धनकामनया जपति स धनवान्भवतीति तात्पर्यम् पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रेतिलक्षणात्"। धनदस्य सेवया धनिकत्वं युक्तमेव। पुष्पिताग्रापदं कल्पलतायां पुष्पितान्यग्राणि यस्याः सेति समन्वेति ॥ ३६ ॥

**यो हर्षितः सततं सुखकारी साधकवृन्दविषादविदारी।**
**यः कुपितो बहुधा धनहारी सोऽस्तु बटुर्मम मानसचारी ॥ ३७ ॥**

धनहारी, धनं हरति तच्छीलः (दुष्टानामित्यवधार्यम्) धनहरणे हेतुः प्रदर्शितः कुपित इति। प्रसन्नो यः साधकानां विषाददूरीकरणपूर्वकं सुखकारकः कुपितश्च यो धनविनाशकर इतिवर्णनं—"रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टानितिवज्ज्ञेयम्"। यद्वा धनं हरति प्रापयति भक्तानां गृहेषु, स धनहारीति सदाशिवशास्त्रिणः। तत्पक्षे कुपित इतिस्थाने यो, नमतां बहुधेति पठनीयन्तेनोभयविधोप्यर्थः सुलभः। यथा अनमतामिति पदं छित्वा हञो हरणं दूरकरणं मोषणंवा बोध्यम्। नमतामिति च कृत्वा हञो हरणं प्रापणं बोध्यम्। सन्देशहरादिष्विव ॥ ३७ ॥

यः पुरुषोऽतिसमाहितबुद्धिस्त्वाम्भजतेऽतिसमाहृतशुद्धिः ।
सोऽत्यधिकं धनवान्वसुधाया दोधकतामयते सकलायाः ॥ ३८ ॥

धनवान् प्रसिद्धोर्थः । समाहितमतिः परंपवित्रश्च यो जनस्त्वां भजति स वसुधाया दोहनकरो भवतीति पद्याशयः । यद्वा कुलक्रमागतमिदम्बोध्यम्, यथा सावधानो यः शुद्धिं समाहृत्य द्वितीयमकारमावेद्येति निष्कर्षः । अर्थात्तत्क्रमागतपूजोपचारादित इति भावार्थः । त्वाम्भजते स धनवान् वसुधाया अपि दोहको भवतीति चाशयः । उत्तराम्नायानुकूलं बटुकभैरवमाराधयञ्जनः शीघ्रं मनोऽभिलषितसिद्धिमवाप्नुयादिति-तत्तन्त्रेषु बहु वर्णितम् । वयन्तु ब्रूमः उभयथापि समाराधयन्साधको वसुधादोहन-दक्षो भवतीतिदिक् । दोधकं वृत्तं—दोधकवृत्तमिदंभभभाद्गाविति लक्षणात् ॥ ३८ ॥

विद्यारसिको जपेत्त्वदीयां नामालिं मनुसम्पुटां शतं यः ।
सम्वत्सरतः स वागधीशो जायेत प्रतिभानवान्प्रसिद्धः ॥ ३९ ॥

प्रतिभानवान्, प्रतिभानम्प्रतिभा सास्यास्तीति प्रतिभानवान् । "प्रज्ञा नवनवोन्मेष-शालिनी प्रतिभा मता" इति रुद्रकोशोक्तप्रतिभाप्रदो देव इत्यर्थः । मनुसम्पुटितना मावलीपाठशतकं प्रत्यहं कुर्वन् विद्याभिलाषी पुरुषो वर्षमात्रकालतो वागीश्वरतुल्यो विद्वान्भवेदितिपद्याशयः । तदेवोक्तं बटुकभैरवपटले—"विद्यां प्राप्नोति विद्यार्थी, धनार्थी धनमाप्नुयात्" इति । अपिच भैरवकल्पेऽपि—"साधकस्याचिरादेव कवित्वं सम्प्रजायते । सुसंस्कृतैर्गद्यपद्यैरनवद्यैस्तथैव च । गंगाप्रवाहवद्वाणी भवत्येव न संशयः । षण्मासैश्च कविर्भवेदित्यादि । यद्यपि प्रीतिवर्धन इत्यपिनामात्रमिलति परम्बहुम-तादिदमेव (प्रतिभानवान्) स्वीकृतमस्माभिः ॥ ३९ ॥

यस्यास्ति पुराकृतं सुपुण्यं यो राजा च कविः परम्बुभूषुः ।
स त्वां भजतेऽत्र नागहारं नान्यः स्तोतुमलं न वा प्रणन्तुम् ॥ ४० ॥

नागस्य हारो यस्य स नागहारः । उग्रपुण्यवान्राजा कविश्च बुभूषुः पुरुषस्त्वा-म्भजते । अन्यः पापादिस्तु त्वां नन्तु स्तोतुमपि न शक्नोतीति पद्याशयः । तदुक्तं विश्वोद्धारतन्त्रे—'नास्तिकैरसमैर्मूर्खैः, पापैर्ध्यानविहीनकैः । न साध्यतेऽयं देवो वै,

भैरवोऽस्मिन्कलौ युगे इति' । "न साध्यते वै मन्त्रोऽयं, सिद्धः सत्यं कलौ युगे" इत्यपि पाठभेदोऽस्ति । उभावप्यर्थावस्मदिष्टसाधकाविति दिक् ॥ ४० ॥

**मन्ये शरणागतान्स्वपादे निःश्रोत्रानपि च स्वभाववक्रान् ।**
**हस्ते धरसे न वीक्ष्य दोषान् यल्लोकप्रथितोऽसि नागपाशः ॥ ४१ ॥**

नागमयः पाशः (करे) यस्य स नागपाशः । निःश्रोत्रान् श्रवणरहितान् कर्णरहिता हि सर्पा इति सार्वजनीनम् । स्वभावतो वक्रान्कुटिलानपि शरणागतान्भागान्करे धरसे नागपाशत्वात्तवेति नामानुगुण्यम् । पक्षे श्रोत्ररहितान् बधिरान् यद्वा श्रोत्रं श्रुतिस्तद्रहितान् स्वाध्यायादिहीनान् मूर्खानित्यर्थः शरणागतान्नागान् क्रूराचारिणोऽपि जनान् हस्ते धरसे स्वीकृत्य पालयसीत्यर्थः । "श्रुतिः श्रोत्रे तथाम्नाये, वार्तायां श्रोत्रकर्मणि" इति विश्वः । "नागः पन्नगमातङ्गक्रूराचारिषु तोयदे" इति मेदिनी । तेषां दोषाँश्च नावेक्षसे, नैवाश्रितेषु गुणदोषविचारणा स्यादिति न्यायात् । एतेन महत्ते कारुण्यपूर्णं भक्तवात्सल्यमितिव्यज्यते ॥ ४१ ॥

**भूपादयुगं च व्योमकेशं पारावारमहोदराग्निजिह्वम् ।**
**वायुश्वसितश्च पर्वतास्थि प्राहुर्भद्रविराट् स्वरूपमेके ॥ ४२ ॥**

व्योमकेशः, व्योमैव केशा यस्य स व्योमकेशः । विराड्रूपस्यैवम्भूतत्वात् तदुक्तं गीतासु—'नभः स्पृशं दीप्तमनेकवर्णमिति' नभःस्पृक्शब्देन हि व्योमकेशत्वमुपलभ्यते, तथैव शीर्ष्णो द्यौः समवर्तत इति श्रुत्यापि. । नाम्नि चास्मिन्नाद्याक्षरस्य संयुक्तत्वात्पूर्वो वर्णो दीर्घ इति छन्दो भङ्गो न दोषाय, व्योमकेश. इति नामार्थानुगुण्यवतश्छन्दसोऽस्य पूर्वमेवमक्रान्तत्वान्नाम्नोऽस्य चापरिवर्तनीयत्वाच्च । वस्तुतस्तु वकारसंयोग उच्चारणे मृदुतया न स्पृष्टयति भङ्गतां छन्दसः । "वकारोच्चारणं मृदु" इतिगान्धर्वविदामुक्तेः । एके आचार्या इत्थं भूतमपि ते विराड् रूपं वदन्तीत्यर्थः । भद्रविराट् छन्दः तल्लक्षणमुक्तं छन्दः कौस्तुभे—ओजे तपरौ जरौ गुरुश्चेन्म्सौ ज्गौग् भद्रविराड् भवेदनोजे " इति । भद्रं च विराट् चेति तदर्थोऽनुयोज्यः ॥ ४२ ॥

**येषां कपालभृत्त्वं दृक्पथमायासि पूर्वकृतपुण्यैः ।**
**ते त्रिदशैरपि मान्या धन्या गुण्या यशस्विनः प्रभवः ॥ ४३ ॥**

कपालं (ब्रह्मणः) बिभर्ति स कपालभृत्। क्विप् चेति भृञः क्विप्. ह्रस्वस्येति तुक् च। ब्रह्मकपालधारणन्तु कङ्कालनामनिर्वचने लिखितमेवानुपदमस्माभिस्तत्तत एवावगन्तव्यम्। स्पष्टश्चाशयः॥ ४३॥

शरणम्प्रयान्ति ये त्वां भक्त्या कालं मनोज्ञविधुभालम्।
अकुतोभयाः पदं ते निदधति मृत्योः शिरस्यार्याः॥ ४४॥

कालः समयस्वरूपो यमो महाकालनामरुद्रो वा। कलनात्सर्वभूतानां स कालः परिकीर्तित इतिवचनात्। त्वां शरणं प्रपन्ना न मृत्योरपि बिभ्यतीति भावार्थः। आर्यावृत्तम्—"यस्याः पादे प्रथमे, द्वादश मात्रास्तथा तृतीयेपि। अष्टादश द्वितीये, चतुर्थके पञ्चदश सार्येतिलक्षणात्॥ ४४॥

येषां कपालखण्डैर्माला धृत्वा कपालमाली त्वम्।
तत्पुण्यगीतिविषये नीरसना शारदा तथा शेषः॥ ४५॥

कपालानां माला यस्यास्ति स कपालमाली। येषां (पुरुषाणां) कपालानां माला त्वया ध्रियते तेषां कियत् कीदृक् वा पुण्यमिति वक्तुं शारदा शेषोऽपि च नालम्। अकथनीयपुण्यप्रभावा हि ते इतिभावः। गीतिच्छन्दः "आर्याप्रथमदलोक्तं, यदि कथमपिलक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां, तां गीतिं गीतवान् भुजङ्गेशः" इति लक्षणात्॥ ४५॥

बटुबीजमन्त्रजापी द्विषां प्रतापी परम्प्रथितः।
वपुषा रतिरमणीयः कासां सुदृशां न कमनीयः॥ ४६॥

कमनीयः, कमितुं योग्यः कमनीयः कमेरनीयर्। बटोर्बीजमन्त्रसिद्धाः पुरुषाः परं प्रतापशालिनः प्रसिद्धाः सर्वाङ्गसुन्दराः कामतुल्याः सन्तोऽखिलसुदृशामभिलषणीया भवन्तीति भावार्थः॥ ४६॥

यस्त्वां मृदूपगीतीं रचयित्वा स्तौति पूजान्ते।
स्वीयं कलानिधित्वं यच्छसि तस्मै प्रसन्नस्त्वम्॥ ४७॥

कलानिधिः, कलानां चतुःषष्टीनां निधिः खनिः कलानिधिः । सोमस्वरूपो वा, पूजान्ते यः साधको मृदुला उपगीती रचयित्वा गायन्बटुं स्तौति, तस्मै प्रसन्नो भगवान् भैरवः स्वकलानिधित्वं सर्वकलाकुशलत्वं ददातीति पद्याशयः। उपगीतिवृत्तम् तल्लक्षणमुक्तं वाणीभूषणे—"गाथोत्तरदलतुल्यं, पूर्वदलं यदि भवति बाले। तामिह फणिपतिभणितामुपगीतिं वर्णयन्ति जनाः" इति ॥ ४७ ॥

पथ्यायान्तो यान्तोऽप्यन्तर्दधाति त्रिलोचनं त्वां ये ।
सहसैव दिव्यगतयस्तरन्ति ते सर्वदुर्गाणि ॥ ४८ ॥

त्रिलोचनः, त्रीणि सूर्यचन्द्राग्निरूपाणि लोचनानि यस्य स त्रिलोचनः। अथवा त्रिभिर्ब्रह्मविष्णुरुद्रैर्लोच्यते विमृश्यते स त्रिलोचन इति केरलीयसदाशिवशास्त्रिणो वदन्ति । पद्याशयस्तु प्रकटः । पथ्यावृत्तम्—"त्रिष्वङ्ककेषु पादो दलयोराद्येषु दृश्यते यस्याम् । पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम्,, इति लक्षणात् ॥ ४८ ॥

साधकवर्यान्पातुं भवसि यदा त्वं स्वयं ज्वलन्नेत्रः ।
तान्प्रति कुटिलाम्भ्रुकुटीं कर्तुं कालोऽपि नैवालम् ॥ ४९ ॥

ज्वलन्नेत्रः, ज्वलन्ति प्रकाशमानानि नेत्राणि यस्य सः । यान्साधकान्पातुं यदा त्वं विस्फारितेक्षणो भवसि तदा तान्प्रति कालोऽपि न किञ्चित्करः । एवकारेण सुदृढीकृतोर्थः । बटुकमाराधयतो जनान्प्रति कालस्याकिञ्चित्करत्वं तदुपासनायां बटुकपटले प्रोक्तम्—"हृदये त्वासनं ध्यात्वा, तन्मध्ये देवमास्थितम् । शूकरीमुद्रया युक्तं खेचरीबहुमेलकम् । न तस्य कालजी मूर्तिः कान्तिमण्डलमाप्नुयात्" । इत्यादि । ४९

योऽयं तपनस्तपति तथा हीन्दुश्चन्दति दीप्यतेऽनलः ।
स किलैष तव प्रभावको यत्सिद्धं त्रिशिखीति नाम ते ॥ ५० ॥

त्रिधा शिखी, त्रिशिखी- यद्वा त्रिशिखं शूलमस्यास्ति स त्रिशिखी । पूर्वोक्तार्थे शिखी अग्निः, तेन तेज उपलक्ष्यते तत्त्रिविधं यस्यास्ति सूर्यचन्द्राग्निरूपमिति पद्ये प्रकटितं नामानुगुण्यमाधत्त इति दिक् ॥ ५० ॥

ब्रह्माद्याः किल चक्रवर्तिना सामन्ता इव लोकपालकाः ।
भवता विहिता निवासिन ईशस्तु त्वमसि त्रिलोकपः ॥ ५१ ॥

त्रिलोकपः, त्रीन् लोकान् पाति सः यथा एकेन चक्रवर्तिना बहवः स्वाश्रिताः सामन्ता देशविशेषेषु पालनाय नियम्यन्ते, तथा त्वयैव भगवता ब्रह्माद्या लोकपालकत्वेन दिक्षु नियुक्ता न तदीश्वरीकृताः । तदधीश्वरस्तु दृष्टान्तोपमानभूतचक्रवर्तीव भवान् विजयसे, इत्युपमया ते महिमवैशिष्ट्यं प्रतीयते । यतस्तव नाम त्रिलोकप इति चरितार्थम् ॥ ५१ ॥

यस्त्रिनेत्रतनयं कलयंस्त्वाम्प्रध्यायति बालभावतः ।
परमार्तास्तस्य शत्रवो वैतालीयपदं प्रयान्ति वै ॥ ५२ ॥

त्रिनेत्रतनयः, त्रिनेत्रस्य आदिमहेश्वरस्य तनयः । महेश्वर एव बटुकभैरव इति प्रतिपादितमनुपदं, साम्प्रतं तत्तनय इति न विरोधः । "एकोऽहं बहु प्रजायेय" इत्यादिश्रुत्या तस्यैव स्वरूपभेदत्वात् । तथा च "आत्मा वै जायते पुत्रः" "आत्मा वै पुत्रनामासि" इत्यादिश्रुत्या च पितुःस्वरूपत्वादेव पुत्रस्य । व्यवहारार्थं पुराणेषु कल्पभेदतया च कथान्तरेषु तथोपलम्भात् । अपरं च रुद्रसदाशिवेश्वरेषु भेदमाहुः शाक्ताः पुराणप्रवीणा अपि, यथा देवीभागवते व्यासः—"ब्रह्मा विष्णुश्च रुद्रश्च, ईश्वरश्च सदाशिवः । एते पञ्च खुराः प्रोक्ता, देवी पादतले स्थिता" इत्यत्र रुद्रेश्वरसदाशिवाः पृथक् पृथङ्मता इति प्रोक्तान्यतरस्य पुत्रोऽयमन्यतमस्य चावतार इति सन्तोष्टव्यम् । आदिमहेश्वरस्य तेजसा संम्भूतोऽयं बटुरितिकथा शिवपुराणे स्फुटमुपलभ्यते । स हि महेश्वरः स्वेन तेजसा रूपान्तरमाश्रित इति सर्वेषां सारः । एवं लोके तत्तनयत्वं सिद्धमेव, न विरुद्धम् । वैतालीयं छन्दः—षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुरिति लक्षणात् ॥ ५२ ॥

किङ्किणिकाक्वणसंमदवन्तं, कलगत्या चटुलम्प्रचलन्तम् ।
निजकरयुग्मवराभयवन्तं धन्यो डिम्भं भजति भवन्तम् ॥ ५३ ॥

डिम्भः, बालः । यद्वा डिम्भयति संचिनोति प्रलयकाले सकलं जगत्स डिम्भः

परमात्मा, ब्रह्मस्वरूप इतियावत्। डिभी संघाते चुरादिः, अस्मात् पचाद्यच्। उभयार्थग्रहणेऽपि तं भजमाना धन्या एव। पद्ये सगुणस्वरूपवर्णनेन ब्रह्मैव लीलावटुकरूपं धृत्वा सगुणतामागतमिति प्रातिभाति ॥ ५३ ॥

इतरेतरवर्णप्रलयान्तं न्यासं कुर्वन्नादिक्षान्तम्।
त्वां ध्यायति यो हृदये शान्तं स जनो वशयेत्कमलाकान्तम् ॥ ५४

शान्तः स्पष्टोर्थः। पद्येऽस्मिन् वटुकमाराधयञ्जनस्तन्मातृकान्यासपूर्वकं ध्यानादुक्तार्थं लभते। तदेतत्-देववश्यं राजवश्यं सर्ववश्यं तथैव चेति पटलोक्तिमनुसन्धायोक्तम्। मातृकान्यासश्च प्रसिद्ध एव तत्तत्तन्त्रेषु द्रष्टव्य इति दिक् ॥ ५४ ॥

उग्रा अपि विपुलम्बलवन्तो निष्करुणा अपि वा छलवन्तः।
त्वयि शमिनस्तु भवन्त्युपयाते सिद्धा शान्तजनप्रियता ते ॥ ५५ ॥

शान्ता जना योगिनः प्रिया यस्य स शान्तजनप्रियः। त्वय्युपयाते वरदानार्थी साधकसंमुखमागते सति, उग्रा वलवन्तो निष्करुणाश्छलवन्तोऽपि जनाः शमिनो भवन्तीतिपद्यार्थः। तेन महत्ते दिव्यैश्वर्यमिति व्यज्यते। पद्याशयोत्र नामानुगुणः। लब्धसिद्धयो हि प्रायशः शमिनो भवन्तीति स्वभाव एव सताम् ॥ ५५ ॥

नामसु यः स्वाहा योजयते निशि समर्च्य बटुकं भोजयते।
तन्नामस्मृतिसाध्वसपुलकं तदरिर्धावति पादाकुलकम् ॥ ५६ ॥

बटुकः स्पष्टोर्थः। सात्विकस्वरूपपरमिदं नाम। अथवा वटून् ब्रह्मचारिणः कायति उपदिशति सकलनिगमागमरहस्यामिति बटुक इति केरलदेशीयाः सदाशिवशास्त्रिणः। "कैशब्दे" इतिधातुः। अत्रैवं समाधीयताम्— यद्भैरवतन्त्रेषु यामलादिषु च बहुत्रानेन वटुकेन तन्त्राणान्तत्वमुपदिष्टमुपलभ्यते। यतो हि तत्र-आनन्दभैरव उवाच, ब्रह्मभैरव उवाचेत्यादि शिक्षणवाक्यमुपलभ्यते। तथा च भूतडामरतन्त्वने नैवोपदिष्टं, तस्योन्मत्तभैरवोन्मत्तभैरव्योः सम्वादमयत्वात्। अथवैवं समादध्मो वयम्, यदस्यवटोः शिवस्वरूपत्वाच्छिवस्य च सर्वागमप्रणेतृत्वादस्यापितत्तत्त्वोपदेशकत्वम्। पद्ये च सिद्धिं कामयतां प्रति विधानमादिष्टं, यथा निशीथे वालमेकमाहूय तस्मि-

न्बटुकं ध्यात्वा संपूज्य बलिदानं कृत्वा तद्द्रव्येण नामावलीनामसु प्रत्येकं स्वाहेति संयोज्य भोजयेत् (स्वहस्तेन) तदा सत्वर काम्यासिद्धिः। पादाकुलकं छन्दस्तल्लक्षणं यथा—"यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम्। अनियतवृत्त परिमाणसहितं प्रथितं जगत्सु पादाकुलकम्" इति वृत्तरत्नाकरे। एवं यस्सज्जनो बटुकमर्चयते तन्नामस्मरणमात्रभीतस्तदरिः पादावाकुलौ यस्मिन्कर्मणि यथा तथा धावतीति पद्यार्थः॥ ५६॥

हृदये बहुधा कलितैषणस्त्वां यजतेऽर्चति यो बहुवेषम्।
वितरन्नखिलं किल वाञ्छितं तदृशि यास्युपचित्रकरूपैः॥ ५७॥

बहवो वेषा यस्य स बहुवेषः, अनेकरूपधारी देव इत्यर्थः। बहुवेषं भवन्तं भजतां दृशि भवानुपचित्रकरूपैर्विचित्रैरनेकैश्च वेषैरायातीति युक्तमेव। ये यथा माम्प्रपद्यन्ते तांस्तथैव भजाम्यहमिति गीतासूक्तत्वात्। उपचित्रकं छन्दः। उपचित्रकं सौस् लौग् भौ भगौग्" इति तल्लक्षणं पिङ्गलसूत्रेषु। ५। ३२॥ लभ्यते॥ ५७॥

द्वारकं दैत्यवृन्दानां भक्तानाम्भयहारकम्।
कारकं सम्पदां वन्दे खट्वाङ्गवरधारकम्॥ ५८॥

खट्वाङ्गवरधारकः, खट्वाङ्गं शस्त्रविशिष्टं वरश्च तयोर्धारकः। स्पष्टोर्थः पद्यस्य। आद्यन्तयमकम्॥ ५८॥

आपदुद्धारणे दक्षं विश्वकक्षं वरप्रदम्।
आरक्तकुटिलाक्षं तम्भूताध्यक्षम्भजामहे॥ ५९॥

भूताध्यक्षः, भूतानां पञ्चमहाभूतानाम्प्रमथादीनां वा समस्तप्राणिनां वाऽध्यक्षः स्वामी नियन्तेत्यर्थः। भूतानाम्पतये नम इति यजुःश्रुतेः। प्रकटः पद्याशयः॥ ५९॥

अगतीनां गतिं युक्तयतीनाम्परमं यतिम्।
बटुकाकृतिकं पुण्यश्लोकं पशुपतिम्भजे॥ ६०॥

पशुपतिः, पशूनाम्ब्रह्मादिस्थावरान्तानाम्पतिः पशुपतिः। यथा च सूतसंहितायामुक्तं शिवेन—'ब्रह्मादिस्थावरान्ताश्च, पशवः परिकीर्तिताः। तेषाम्पतिरहं देवि,

स्मृतः पशुपतिर्बुधैरिति" । तथा च यजुःश्रुतिरपि:—"पशूनाम्पतये नमः" अत्र पशूनाञ्जीवानाम्पतिरिति महीधरभाष्यम् । सरलः पद्याभिप्रायः । सर्वानविशेषेण पश्यन्तीति पशवो योगिनः समदर्शिनस्तेषां पतिः पालक इति सदाशिवशास्त्रिणः प्राहुः, सोऽयमप्यर्थो द्वितीयेन चरणेन प्रदर्शितः । पुण्यश्लोकेतिविशेषणार्थस्तु पुण्यः श्लोको यशो मन्त्रो वा यस्य स पुण्यश्लोकः, स एवोक्तः श्रुतौ "श्लोक्याय चावसान्याय-च नमः" इति । तत्र श्लोका मन्त्रा यशो वा, इति महीधरभाष्यम् । श्लोकं छन्दः "श्लोके षष्ठं गुरु ज्ञेयं, सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः" इति कालिदासोक्तलक्षणात् ॥ ६० ॥

यत्साधनं जनेभानां तृप्त्यै मधुरमिक्षुकम् ।
दिव्यैश्वर्यप्रदं दृष्ट्या वन्दे कमपि भिक्षुकम् ॥ ६१ ॥

भिक्षुकः, भिक्षून्कायति—उपदिशतीति भिक्षुकः । "कैशब्दे" इति धातुः । यद्वा भिक्षणशीलः । तथा च भिक्षूणां कं सुखं यस्मात्स भिक्षुकः । "सुखशीर्षजलेषु कम्" इति मेदिनीकोषोक्तेः । पद्ये भिक्षुकस्य दिव्यैश्वर्यप्रदत्वं विरुद्धम्, देवदत्तदृष्ट्या तदाभासः । कमपीति लोकविलक्षणमनिर्वचनीयमिति स्वाभीष्टलाभः । यथा गजाना-मिक्षुरतीव प्रीतिकरस्तथा बटुकाराधनं मानवानां सुखकरमिति व्यज्यत औपम्यं रूपकेण ॥ ६१ ॥

तव चरणयोर्भक्त्यासक्त्या कृतप्रणयो दृढं
जपति च मनुं ध्यायं ध्यायं भवन्तमहर्निशम् ।
गृहजनभवां हित्वा चिन्तां त्वदेकपरोऽस्ति य-
स्तदाखिलकृतिं कर्तुम्प्रेम्णा भवान्परिचारकः ॥ ६२ ॥

परिचारकः, स्पष्टार्थं नाम । अयमीदृशो भगवान्करुणापटुर्बटुर्यो दृढप्रणयपूर्वं ध्यायंध्यायं गृहजनभवां चिन्तां विहायैनं भजति, तस्यायं योगक्षेमप्रदानादिरूपां परिचर्यामपि करोति, इति भावः । श्रूयते च कारुण्यवशीकृतानां देवानाम्बहुत्र भक्तप-रिचारकत्वमपि, तथा गीतास्वेव—"अनन्याश्चिन्तयन्तो मां. ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां, योगक्षेमं वहाम्यहम्" इति भगवान्हरिः । यद्वा परितः सर्वतश्चरतीति परिचारकोऽन्तर्यामिस्वरूप इति केरलीयसदाशिवशास्त्रिणः प्राहुस्तदपि वरम् ॥६२॥

अवनिवलये स्वर्गे वर्गेऽपि वा यजतां सतां
कुहचिदपि वा लोके लोकैस्तथास्तिकनास्तिकैः ।
सविधि बहुधा पूज्यो जातः शुभाऽशुभकर्मणि
तत इह भवान्नाम्ना धूर्तः सुरैः किल कथ्यते ॥ ६३ ॥

धूर्तो मायावान् । अयमेतादृशो मायावान्यत्सर्वैरास्तिकैर्नास्तिकैः (जैनादिभिः) रपि बहुधा पूजां गृह्णात्येव यथा कथमपि, विशेषतः पूर्वमेवेत्यस्य धूर्तत्वमवधार्य समस्तदेवैरसूययेव धूर्तं नामेति स्वान्तरितोत्प्रेक्षणम् । शुभेषु शान्त्यादिष्वशुभेषु मारणोच्चाटनादिषु च द्वारपूजनमण्डपार्चनक्षेत्रकीलनेषु पूर्वमेव बटुक (क्षेत्रपाल) पूजा प्रसिद्धा सर्वतन्त्रेषु । अत्र सदाशिवशास्त्रिणस्तु धुरि, अग्रे, ता दया यस्य स धूर्त इति विशेषार्थ माहुः, करुणायां तु ता स्त्रियामिति केशवोक्त्यनुसन्धानात् ६१

निजचरणयोरासक्तानां कृतेत्वभयङ्करी
खिलमदवतां दुर्वृत्तानां कृतेऽतिभयङ्करी ।
भुवननिरवच्छिन्ना विष्वक् सुरासुरवन्दिता
प्रभवतु ममाप्येषा भूत्यै दिगम्बरता तव ॥ ६४ ॥

दिश एवाम्बराणि यस्य स दिगम्बरः । तदुक्तं भैरवकल्पे-"दिगम्बरं च रौद्रं चेति" इयमस्य दिगम्बरता स्वपदानुरागिणां साधकानामभयङ्करी, दुराचारिणां मदवतां (साधकद्विषां) च कृते भयावहास्तीति वर्णनं—"श्मशाने ष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटी परिकरः । अमङ्गल्यं शीलं तव भवतु नामैव मखिलं, तथापि स्मर्तॄणां वरद परमं मङ्गलमसि" इति शिवमहिमवज्ज्ञेयम् । दिगम्बरस्य भुवननिरवाच्छिन्नता युज्यत एव ॥ ६४ ॥

क्षितिमतिभराक्रान्तां तान्तां विलोक्य शचीश्वर-
प्रभृतिविबुधैर्भारोद्धाराय नम्रनिवेदितः ।
स्वहृदि करुणापूर्णः शूरः स्वयं धरणीभरं-
लघयितुमभून्नाम्ना शौरिर्भवानिह विश्रुतः ॥ ६५ ॥

शौरिः, शूरस्यापत्यं शौरिः, विष्णुस्वरूप इतियावत् । शौरिश्रीवत्सदैत्यारि विश्वक्सेनजनार्दना इति शब्दार्णवः । शौरिरित्यभिधया बटुकस्यैव कृष्णरूपेणा वतीर्णत्वान्माहात्म्यातिशयः । "गौरो भैरव रुद्र कहावे, कृष्ण कहावे काला" इति जनश्रुतेर्मूलस्य "श्रीकृष्णः कालभैरवः" इति शाक्तेपूपलम्भात् । धरणीभरं लघयितुं भवानेव विश्रुतः शौरिरभूदिति निर्मातुरनन्यत्वेन सर्वत्र तदाभासः । कतिपयेषु पुस्तकेषु शूर इति, कतिपयेषु च शौरिरिति नामद्वयं मिलति ततोऽत्र द्वेऽपिनामनी पद्ये धृतेऽस्माभिस्तदाभिमतम्पठन्तु सहृदयाः साधकाः ।

हरिणमिव संमाद्यन्तन्त्वाम्परं मृदुगीतिभि-
स्त्रिदशवनितावृन्दैर्नृत्यैः प्रसादितमर्चितम् ।
प्रभजति जनः पश्यन्मध्येहृदम्बुजमादरा-
त्तमिह दधते प्रीत्या चित्ते वरा हरिणीदृशः ॥ ६६ ॥

हरिणः, । हरति मनः । ह्रियते गीतस्तुत्यादिना वेति हरिणः । हरतेः "शास्त्याहृञ्स्विभ्य इनच्" इतीनच् । शुक्लवर्ण इति वार्थः । शुद्धस्फटिकसङ्काशमित्युक्तत्वात् । य एवमुपरिवर्णितादृशा त्वां ध्यायति तं प्रीत्या हरिणीदृशः स्वचेतासि दधत इति वर्णनेन साधकस्य सौन्दर्यातिशय प्राप्तिर्व्यज्यते । तदुक्तं रुद्रयामले बटुकोपासनायां, तदुपासकानां कृते—"कामदेव इव स्त्रीणां गन्धर्व इव रूपवान्" इति । हरिणी वृत्तम् । रसयुगहयै र्न्सौ म्रौ स्लौ गो यदा, हरिणी तदेति लक्षणात् ॥६६॥

हीररत्नकान्तिमिन्दुशेखरञ्च सुवर्णवर्ण कुन्तलालिशोभितं यः ।
पाण्डुलोचनम्भवन्तमाश्रयेत यत्नान्विता करस्थली भवेत्तदीया । ६७

पाण्डुलोचनः, पाण्डुवर्णानि लोचनानि यस्य सः । बटोस्त्रिविधस्वरूपस्य सात्विकमूर्तेः, पाण्डुलोचनत्वं शुद्धस्फटिकसङ्काशशरीरत्वात् । सात्विकनेत्राणाञ्च सत्वं लघु प्रकाशकमिति गुणस्वाभाव्यात्पाण्डुत्वं स्फुटम् । तेनास्य लोचनेषु पाण्डुतया शान्तता व्यङ्ग्या । यथा विश्वोद्धारतन्त्रस्थ भैरवकल्पे—"तुषारकणिकाभासं मायारूपं सनातनम् । मूर्ध्नि खण्डेन्दुलसितं त्रिनेत्रं शान्तलोचनमिति" । पद्ये चास्मिन् हीररत्नकान्तित्वचन्द्रशेखरत्वसुवर्णकुन्तलत्वविशिष्टस्य सात्विकरूपस्यैव ध्येयतया-

वर्णनम् । य एवन्त्वान्ध्यायति चाश्रयेत तस्य करस्थली यवमती ( यवरेखान्विता ) भवेदित्याशयः । यवरेखा हि यत्करे भवति तस्य धनधान्यादिसम्पत्तिमत्वं सामुद्रिकशास्त्रे स्फुटं वर्ण्यते । यवमती वृत्तम् । "यवमती जौं जौं, ज्रौ ज्रौग्" इति छन्दःशास्त्रम् ॥ ६७ ॥

**अनेकवेषवानपि प्रभुस्त्वं स्वसाधनैकतानमानसानाम् ।**
**यतात्मयोगिनाम्परेण धाम्ना प्रयासि दृक्पथेऽधिकम्प्रशान्तः । ६८ ।**

प्रकर्षेणशान्तः प्रशान्तः । प्रपूर्वाण्ण्यन्तादुपशमार्थाच्छाम्यतेः क्तः । पद्ये परेण-धाम्ना दृक्पथे गमनं, तच्च शान्त्येति लोकविलक्षणचमत्कारात्मभावातिशयो वर्णितः। यादृशाः साधका यादृशमस्यरूपं ध्यायन्ति तादृशमेवरूपं कृत्वा शान्त्यायं तेषांदृक्पथमुपयातीति न्यायाद्योगिनां दृक्पथे प्रशान्त आयाति, मुमुक्षूणां तेषां सात्विकस्वरूपस्यैव ध्येयत्वात् । सात्विकस्य बटोर्मोक्षप्रदत्वं चोक्तं भैरवकल्पे—"सात्विकं मुक्तिदम्प्रोक्तं रोगनाशाय तामसम्" इति। अपिच तत्रैव—"विद्याकामो मुक्तिकामो ध्यानं कुर्याच्च सात्विकम्" इति ॥ ६८ ॥

**सुरूपकामिनां सुकान्तिदस्त्वं शमाभिलाषिणाञ्च शान्तिदोऽसि ।**
**त्वमेव ते पदानुरागिणीनां विलासवर्धको विलासिनीनाम् ॥ ६९ ॥**

शान्तिं बिषयनिवृत्तिं ददाति स शान्तिदः । नराणां नारीणामपि यथेष्टकामपूरणकर्तायं बटुरित्युपरिबर्णनेन प्रकटम् । तच्चातिप्रसिद्धं बहुशो भैरवतन्त्रेषु "यं यं-चिन्तयते कामं तन्तम्प्राप्नोति निश्चितम्" इति । विलासिनी छन्दः । "विलासिनी जरौ जगौग्" इति पिङ्गलसूत्रोक्तलक्षणात् ॥ ७६ ॥

**भास्करस्य दिवसेऽर्धनिशायां स्वागतानभिमुखं शुनकान्यः ।**
**तावकीनबलिमर्पयते ना त्वं द्रुतम्भवसि तस्य सुसिद्धः ॥ ७० ॥**

सिद्धः, साधकवश्यतां गत इति यावत् । पद्ये रविवारेऽर्धनिशि बलिदानकाले स्वेच्छया संमुखमागतः श्वा बलिं गृह्णीयात्तदा साधकाभीष्टं सिद्धमेवेति वर्णनम् । अत्र शुद्ध इत्यपि नाम क्वचित्पुस्तके लभ्यते, परं बहुसंमतत्वादिदमेव स्वीकृतमस्माभिः स्वागता वृत्तम् । "स्वागता तु रनभाद् गुरुयुग्मम्" इति वृत्तरत्नाकरलक्षणात् ।

अभिलषथ धनञ्च सिद्धिमुपार्जितुं स्पृहयथ भवितुं च यद्यपराजिताः
अपि निजचरणौ समर्चयितुं नृपैस्तदिह भजथ शङ्करप्रियबान्धवम्

शङ्करप्रियबान्धवः शङ्कल्याणं कुर्वन्ति ते शङ्करास्ते च प्रिया बान्धवाः परिवारादयो यस्य स, शङ्करप्रियबान्धवः कल्याणकारकपरिवारवानित्यर्थः। यद्वा शङ्करः शिवः स एव प्रियो बान्धवः सहायो द्वितीयो यस्य सः, एकस्यैव शरीरान्तरधारकत्वात् । यद्वा शङ्करस्य प्रियश्चासौ बान्धवश्च शङ्करप्रियबान्धवः, शिवतेजसैवास्य सम्भूतत्वात्पुत्रत्वे सिद्धे, गुणवति निजपुत्रे मित्रता सूपपाद्येति न्यायात्प्रियबान्धवतापि सिद्ध्यति। पद्ये त्वस्याराधनेन ये गुणाः साधकेषु भवितुमर्हास्तेषां दिग्दर्शनम्। तदुक्तं—"तस्यपादाम्बुजद्वन्द्वं राज्ञां मुकुटभूषणम्" इति भैरवीयब्रह्मकवचे। अपि च—"दारिद्र्यं दूरमुत्क्षिप्य जायते धनदोपम" इति भैरवपटले। अजेयो रिपुभिर्भवेत्, सर्वसिद्धीश्वरो भवेदिति च तत्र तत्र भैरवतन्त्रेषु बहूक्तत्वात्। अपराजिता वृत्तम्। तल्लक्षणमुक्तं पिङ्गलाचार्येणच्छन्दः सूत्रेषु "अपराजिता नौ रसौ ल्गौ स्वर ऋषय" इति ॥ ७१ ॥

क्षितिसलिलमहोऽनिलाम्बरभास्करद्विजपतिमखकृत्सु योऽष्टभिदांगतः
जगति विजयते तरङ्ग इवाम्बुधौ स कलयतु शमष्टमूर्तिबटुर्मम ७२

अष्टमूर्तिः, अष्टौ मूर्तयो देहा यस्य सोऽष्टमूर्तिः। यथा "पृथिवी सलिलं तेजो वायुराकाशमेव च, सूर्याचन्द्रमसौ यज्वा, अष्टौ शङ्करमूर्तय" इति यादवः। शिवस्वरूपत्वादस्य सर्वमनुवन्धि, अष्टमूर्तियोंऽम्बुधौ तरङ्ग इव विजयते स बटुर्मे कल्याणं करोतु, इत्याशयः ॥ ७२ ॥

क्षितिगतवसुको मनुं परिजप्य ते ह्यसुलभमपि चेन्निधिं लभते द्रुतम्।
त्वयि भुवनविभो तदद्भुतमस्ति नो यत इह गतवान्निधीश इति प्रथाम्।

निधीशः। निधीनां नवानामीशो निधीशः। नव निधय उक्ताः शब्दार्णवे, "महापद्मश्च पद्मश्च शंखो मकरकच्छपौ। मुकुन्दकुन्दौ नीलाश्च खर्वश्च निधयो नव" इति। यद्वा निधयोष्टौ मार्कण्डेयपुराणोक्तास्तेषां स्वामी निधीशः । मार्कण्डेयपुराणे

षष्ठितमेऽध्यायेऽष्टौ निधयो विस्तरतः प्रोक्ताः । पद्ये तु निधीशत्वाद्भक्तानां निधिदर्शकत्वं युज्यत एवेति साभिप्रायता नाम्नः । निधिस्थानमेत्य बटुकमाराधयञ्जनो द्रुतमेव निधिमाप्नोतीति कालसङ्कर्षणतन्त्रे प्रोक्तं—"मासमेकं शुचिर्भूत्वा त्रिसन्ध्यं यः पठेन्नरः" । (नाम्नामष्टोत्तरं शतमिति पूर्वेणसम्बन्धः) सर्वदारिद्र्यनिर्मुक्तो निधिं पश्यति भूतले" इति ॥ ७३ ॥

**गोदोहावसरे बटुं हृदये योऽन्वदधाति ।**
**चर्मचक्षुषस्तस्य वै ज्ञानचक्षुरुपयाति ॥ ७४ ॥**

ज्ञानचक्षुः, ज्ञानं चक्षुर्यस्य स । ज्ञायतेऽनेनेति ज्ञानं, तत्सामान्यं विशेषमिति द्विधा, वस्तुमात्रावभासकं निर्विकल्पकत्वावच्छिन्नं च । तदुक्तं योगशास्त्रे—"एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्वशः । आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम्" । अपरञ्च "ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः । नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः" इति । पद्ये च—सायं समये बटुकभैरवध्यानाज्ज्ञानवान् भवतीत्याशयः । दोहाख्यं वृत्तम् । तल्लक्षणमुक्तं वाणीभूषणे—"षट्कलतुरगौ त्रिकलमपि विषमपदे विनिधेहि समपादान्ते चैककलामिति दोहामवधेहि" इति । अत्र विषमे त्रयोदश, समे चैकादश मात्रा भवन्तीति विवेकः ॥ ७४ ॥

**तपसामादौ साधकः प्रयजति भवन्तमेव ।**
**त्वमसि सिद्धिकर्ता यतस्तपोमयः स्वयमेव ॥ ७५ ॥**

तपोमयः, प्रसिद्धिमागतोर्थः । तपो हि ब्रह्म, तन्मय इति वा । तपश्चरणादौ गणेशं क्षेत्रपालञ्चेति व्याहृत्या भैरवपूजनं सर्वत्र प्रसिद्धम् । अपि च रामतापनीयोपनिषदि विघ्नं दुर्गां क्षेत्रपालं च वाणीमिति । तथा च प्रयोगसारे—"क्षेत्रपालमसम्पूज्य कर्म यः कुरुते क्वचित् । तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः" इति ॥ ७५ ॥

**वेदान्तस्थाः परमद्वैतनिष्ठाः संवीक्षन्ते यन्तदाकारवृत्त्या ।**
**सच्चिद्रूपः स्वप्रकाशोऽसि सत्वमष्टाधारो ज्ञानगम्यो निरीहः ॥ ७६ ॥**

अष्टाधारः, अष्टौ आधारा वासस्थानानि यस्य सोऽष्टाधारः । वेदान्तिनां

मतेन चक्राष्टकं देहेऽस्ति । तेषु चक्रेषु तेऽद्वैतबुद्धया तं वटुकमेव ब्रह्मतया ध्यायन्तस्तदाकाराकारितान्तःकरणतया विलीयमानास्तत्पदं गच्छन्ति वेदान्तिनः । यद्वेदान्तिनः स्वप्रकाशं सच्चिदानन्दरूपं किमप्यद्वैततत्वं ध्यायन्ति तत्त्वमेवेति पद्याशयः ॥ ७६ ॥

मूलाधारादिषु चक्रेषु षट्सु नानारूपैर्यतयश्चिन्तयन्ति ।
दिव्यं तेजः स्वसहस्रारपद्मे पश्यन्ति, त्वं स षडाधारनामा ॥७७॥

षडाधारः, षट् आधाराः प्राप्तिसाधनानि यस्य स षडाधारः । योगिनां मतमिदं तथा हि संमोहिनीतन्त्रे—"तैजसानि तु पद्मानि शृणु तेषाम्प्रपञ्चताम् । मूलाधारं तथा स्वाधिष्ठानञ्चमणिपूरकम् । अनाहतं विशुद्धाख्यमाज्ञाख्यं कथितम्परम्" । एतेषामावासोऽपि देहे तत्रैव निदर्शितः—"गुदे लिंगे तथा नाभौ, हृदये कण्ठदेशके । भ्रुवोर्मध्ये तथैतानि पङ्कजानि षडानन ! इति । षट्चक्रवेधनानन्तरं हि सहस्रारे ( ब्रह्मरन्ध्रे ) तत्तेजसश्चिन्तनं योगिनाम्परमो मार्गः । सहस्रारे बटुकभैरवस्य स्थितिर्योगिनीतन्त्रेऽप्युक्ता, यथा—आदिनाथम्प्रति कालभैरववाक्यं—"सर्वेषान्तु सहस्रारे पद्मे तिष्ठामि सर्वदा" इति । योगिनो हि यत्पश्यन्ति तेजः परमुक्तादिशा, तत्त्वमेवेत्याशयः ॥ ७७ ॥

आक्रीडन्तं मृदुलीलं श्मशाने ध्यायन्ति त्वां मुकुटे सर्पयुक्तम् ।
तेषां नृणां सकलापत्तयो वै प्रोड्डीयन्ते द्रुतवातोर्मिकावत् ॥ ७८ ॥

सर्पयुक्तः, सर्पैर्भूषणभूतैर्युक्तः । शिरसि सर्पभूषितं श्मशानभुवि सलीलमाक्रीडन्तन्त्वां ध्यायन्ति तेषामापदो द्रुतं प्रणश्यन्ति, वातस्योर्मिका तरङ्ग इवेति पद्याशयः। वातोर्मिकावृत्तं। तदुक्तं पिङ्गलाचार्येण, वातोर्मी मभौ तगौग् चेति ॥७८॥

सर्वदा गतिं खिले चराचरे सौक्ष्म्यतः क्वचित्क्वचिद्बृहत्तया ।
प्रेक्ष्य ते कृतं सुरैः कृतार्थकं सुन्दरं शिखिसखेति नामकम् ॥ ७९ ॥

शिखीसखः, शिखी बह्निस्तस्य सखा । राजाहः सखिभ्यष्टजिति समासान्तष्टच् जगत्प्राणो वायुरित्यर्थः । तव चराचरव्यापित्वमवधार्य सुरैः कृतमिदं चरितार्थं नामेति पद्यभावार्थः ॥ ७९ ॥

वासुकिर्महीतलन्धरन्नपि प्रोच्यते कदापि नैव भूधरः ।
तेन पूजितस्त्वमात्मशक्तितो भूधरप्रथां गतो भुवन्धरन् ॥ ८० ॥

धरतीति धरो, भुवो धरो भूधरः । स्वशक्त्या भूमिधारक इत्यर्थः । भुवं धरन्नपि वासुकिर्भूधरशब्देन न व्यवह्रियते तदत्रकारणं, यत्तेन पूजितस्त्वमात्मशक्त्या भुवं धरसि, स तु निमित्तमात्रमिति युक्तं ते भूधरत्वमिति । अथवाष्टमूर्तेस्तव पृथिव्या मूर्त्यन्यतरत्वात्तन्मूर्तिगतशक्त्या त्वमात्मनो मूर्ति भुवंधरान्विराजसे शेषरूपेणेति ॥ ८० ॥

येषु यः पदाक्रमन्विराजते स ध्रुवं तदीश्वरो निगद्यते ।
तल्ललन्महीधरेषु भूधराधीशकोऽसि, नास्त्यसौ हिमालयः ॥ ८१ ॥

भूधराधीशो, भूधराः पर्वतास्तेषामधीशः । पद्ये हिमालयस्य सदपि भूधराधीशत्वं निवार्य युक्त्या वटुकभगवतस्तत्साध्यते । सांसारिकीरीतिरियं यद्यो येषु पदाक्रममाणो बरीवर्ति स हि तदीश्वरो भण्यते, बलवतां हि सर्वस्वत्वात् ॥ ८१ ॥

स्वस्वभूमिपालनाय भूपकैस्त्वम्प्रपूज्यसेऽनिशं च याच्यसे ।
तद्वद त्वमेव, तद्गुणः कथं भूपतिस्त्वमेव भूपभूपतिः ॥ ८२ ॥

भुवःपतिर्भूपतिरिन्द्रस्वरूपइत्यर्थः । विष्णुरिति वा । राजानोऽपि स्वस्वभूमिपालनाय त्वां सम्पूज्य याचन्ते तत्त्वमेव वद, कथन्ते भूमिपाः, प्रत्युत तेषां भुवोऽपि रक्षणस्य त्वदधीनत्वात्त्वमेवाऽसि भूपानामपि भूपतिः ॥ ८२ ॥

भूधरात्मज ! त्वदङ्घ्रियुग्मके प्रेमपूर्वमानतिर्नतात्मनाम् ।
रोगदुःखपातकानि हन्त्यहो श्येनिका कपोतकानिव द्रुतम् ॥ ८३ ॥

भूधरात्मजः, भूधराया आधारशक्तेरात्मनि जायते स्वस्वरूपेण विराजते इति सः । यथा श्येनिका कपोतान्हन्ति तथा तव पादयोः कृता नतिरपि नमतां रोगदुःखपातकानि नाशयतीति पद्याशयः । श्येनीवृत्तम् । "श्येनी रजौ रलौग्" इति पिङ्गलोक्तलक्षणात् ॥ ८३ ॥

मन्दाक्रान्ता अपि रिपुगणैर्ये त्वदीयाङ्घ्रिपद्मं
संसेवन्ते तदहितकुलन्दारयन्सारमेयैः ।
आनीतं वा स्वकरकमले दर्शयन्नन्त्रजालं
तैस्तैर्भक्तैर्भवसि विनुतो हन्त कङ्कालधारी ॥ ८४ ॥

कङ्कालधारी, कङ्कालमान्त्रपञ्जरं धरति सः । आन्त्रपञ्जरधरणं हि युक्त्या पद्ये सम्प्रदर्शितम् यथा—शत्रुभिर्मन्दमप्याक्रान्ता ये जनास्तव चरणं शरणमायान्ति तेषां रिपून्सारमेयैर्दारयँस्तैरेव (कुक्कुरैः) आनीतं तदन्त्रजालं हस्ते कलयन्भक्तान्दर्शयित्वा सान्त्वयन्तैरेव किल भक्तवरैः स्तूयसे जय कङ्कालधारीति । मन्दाक्रान्तावृत्तम् । "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" इतिलक्षणात् ॥ ८४ ॥

प्रेतारण्ये कृतवसतिना बालभावानुकूलं
लीलाखेलं कलितुमनसा साधकद्वेषकाणाम् ।
छित्वा मुण्डान्यधिकचटुलं क्षेपणोत्क्षेपणैर्वा
कन्दुक्रीडा क्रियत इति ते विश्रुतं नाम मुण्डी ॥ ८५ ॥

मुण्डी मुण्डमस्यास्ति सः । करे मुण्डधारणं बटुकस्य ध्याने प्रसिद्धं—विश्वोद्धारतन्त्रीयापदुद्धारभैरवकल्पे—"पादनूपुरसंयुक्तं, छिन्नशीर्षविभूषितम्" इति । पद्ये च बालभावानुकूलखेलनार्थं श्मशानवासिना त्वया साधकद्वेषकाणां मुण्डान्यादीयन्ते, सम्पाद्यते च तैर्यथारुचि कन्दुकक्रीडेति कारणात्तव मुण्डीति सिद्धं नाम । श्मशानवासिनो बालस्य मुण्डतः खेलनं युक्तमेव ॥ ८५ ॥

शेषव्यालं हरिरथभिया पादपद्मे प्रपन्नं
व्यालोक्यैवाऽपगमितभयम्पर्यधा यज्ञसूत्रे ।
तस्माद्देवैरपि मुनिगणैर्गीयसेऽनारतं त्वं
कारुण्याब्धिः प्रथितमहिमा नागयज्ञोपवीती ॥ ८६ ॥

नागयज्ञोपवीती, नागस्य शेषस्य यज्ञोपवीतमस्यास्ति स नागयज्ञोपवीती । गरुडभीतिव्याकुलमहिराजं शरणमागतमवेक्ष्य दत्ताभयं तं सत्वरं यज्ञोपवीतीकृतवान्

भगवान्करुणावरुणालयो बटुरिति प्रेक्षमाणैः सुरैर्मुनिभिश्च नागयज्ञोपवीति भण्यते भवानितिभावः। एतेन महत्ते कारुण्यं शरणागतान्प्रतीति व्यज्यते ॥ ८६ ॥

लोकसंहृतिमशेषतः स्वयं यः करोति परिजृम्भयन्मुखम् ।
स प्रसीदतु ममोपरिद्रुतं विस्मयोज्ज्ञनकजृम्भणो बटुः ॥ ८७ ॥

जृम्भणः, जृम्भणं मुखव्यादानं भवति प्रलयकाले सर्वजगद्भक्षणाय यस्येति जृम्भणः । एतदनुसारमेव पद्येर्थगुम्फनं सहृदयहृदयोल्लासमावहति । तत्र च बटुकोऽपि समस्तलोकसंहारकमुखावकाशवानिति विस्मयोज्जनकता विशिष्यते ८७

स्वाङ्गकैर्भुवनमोहनं जनास्त्वाम्भजन्ति हृदि येऽनुरागिणः ।
मार्गधूलिमपि तद्रथोद्धतां वीक्ष्य मोहमुपयात्यदो जगत् ॥ ८८ ॥

मोहयति जगत्सर्वं स मोहनः,। मोहनकारिणस्ते पदाम्बुजं सेवमानानां रथोद्धतां मार्गधूलिमवेक्षमाणा अपि मोहमायान्ति लोका इति भावः। मोहनकरत्वं चास्य नानाप्रकारैर्नानाग्रन्थेषु प्रोक्तं, तच्च तत्तदनुसारसाधनाद्यैर्भवसेवेति स्फुटम्। रथोद्धता वृत्तम्। "रान्नराविह रथोद्धता लगौ" इति वृत्तरत्नाकरोक्तलक्षणात् ॥ ८८ ॥

विद्युन्मालाऽत्यन्तं लोलाऽप्यालोक्य भ्रूकौटिल्यं ते ।
स्तब्धास्ते यावत्कारुण्यं ह्येतादृक् चित्रः स्तम्भी त्वम् ॥ ८९ ॥

स्तम्भी, स्तम्भयति जडीकरोति शत्रूनिति स्तम्भी । तव भ्रूकौटिल्यमात्रावेक्षणेन स्वभावतोऽतिचपला याअपि चपलता यावत्कारुण्यं स्तब्धा भवतीति चित्रं तव स्तम्भनकरणमितिभावः । तत्का वार्ता मानवादीनामितिस्वयमायासर्थः । तदुक्तं बटुकपटले—"अग्निस्तम्भजलस्तम्भसैन्यस्तम्भकरोऽपि वा" इति । विद्युन्माला वृत्तम्। "मो मो गो गो विद्युन्माला" इति लक्षणात् ॥ ८९ ॥

यदा शात्रवाक्रान्तभक्तस्त्वदीयं पदं सेवते मारणं दुर्जनानाम् ।
तदा तद्रिपुं हन्तुमेषा विधत्ते तव भ्रूर्विशाला भुजङ्गप्रयातम् ॥ ९० ॥

मारणः, मारयति भक्तदुःखानि, दुष्टान्दानवादींश्च यः सः। तथा चोक्तं, सर्वशत्रुक्षयकरं सर्वदुःखनिवारणमिति। अस्य मन्त्रस्य वा स्तोत्रस्य जपात्पाठाच्च मारणत्व-

मुक्तं रुद्रयामलेऽपि यथा—"राजशत्रुविनाशार्थं जपेन्मासाष्टकं पुनः" इति "रात्रौ वारत्रयं चैव नाशयत्येव शात्रवान्" इति वा। पुनस्तत्रैव होमविधाने—"निम्बपत्र कटुस्नेहराजिकालवणैर्नरः। हुत्वा मारयति क्षिप्रं, वैरिणो दुर्जनानपि" इत्येवं रूपाणि नानाविधेष्वस्य तन्त्रेषु लभ्यन्ते। पद्ये च यदा शत्रुभिराक्रान्तस्त्वामासेवते तदा तद्रिपून्हन्तुं तवैषा भ्रूर्भुजङ्ग इव प्रयातं चलनं करोतीति भ्रूभङ्गमात्रेण शत्रुसंहार उक्तः। भुजङ्गप्रयातं छन्दः। "भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः" इति लक्षणात्॥ १०॥

परक्षोभबुद्ध्या जपेद्यो मनुन्ते विधानेन चानन्यभावेन मर्त्यः।
स दूरस्थितोऽप्यम्बुधिक्षोभणःस्यात्तदालोकनस्पर्शचर्चैव कास्तु ११॥

क्षोभयतीति क्षोभणः। तदुक्तं तत्कल्पे सर्वसंक्षोभणकरमिति। तथाच—"प्रकृतिं पुरुषं चैव प्रविश्य स्वेच्छया हरः। क्षोभयामास सम्प्राप्ते, सर्गकाले व्ययाव्ययौ" इत्यत्र व्ययः परिणामावच्छिन्नमव्ययमपरिणामीति विवेकः। तच्च शिवस्वरूपत्वादस्य सर्वमनुबन्धिवर्णनम्। एतादृशस्य क्षोभणस्याराधको दूरस्थोऽपि समुद्रं क्षोभयत्तदा तदालोकने स्पर्शे तु तदवश्यंभावीति पद्याशयः॥ ११॥

त्वमेवासि धाता रजःसम्प्रबुद्ध स्त्वमेवासि नारायणः सत्वशुद्धः।
त्वमेवासि रुद्रस्तमः सम्प्रसारी त्वमेवं जनुस्त्राणसंहारकारी॥१२॥

शुद्धः सात्विकस्वरूपः। पद्ये चात्र जन्मस्थितिसंहारकारकत्वेनास्यबटोरेव ब्रह्मविष्णुशिवरूपणमिति दिक्॥ १२॥

आलोक्य त्वां मञ्जुलनीलाञ्जनप्रख्यं
खड्गं शूलं चञ्चलभासं कलयन्तम्।
कारुण्याम्भः साधकलोकेषु किरन्तं
केकामेते मत्तमयूराः कलयन्ति॥ १३॥

नीलाञ्जनप्रख्यः, नीलं यदञ्जनं नीलाञ्जनं तत्प्रख्यस्तत्समानवर्णः इत्यर्थः। "प्रख्यश्च प्रत्यनीकश्च, उभौ सादृश्यवाचकौ" इति दण्डिवाक्यात्। तामसस्वरूपे ज्ञेयमिदं, नीलजीमूत संकाशमित्युक्तत्वाच्चत्र। पद्ये च खड्गशूलयोर्विद्युतः, कारुण्ये

चाम्भसो रूपणान्मधुरोल्लसितभ्रान्तिमतां मयूराणां केकाकरणेन व्यञ्जितया भैरवस्य जलदोपमया कोऽपि विच्छित्तिविशेष उपहारीक्रियते सहृदयानां सेवायामिति भावयन्तु कवयः । मत्तमयूरं वृत्तम् । वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरमिति लक्षणात् ॥ ९३ ॥

रणे सुरैरपि किल भैरवाकृतिर्विधीयते निजरिपुमारणाय वै ।
तदोजसा किल विलसन्सुरव्रजे युगे युगे त्वमखिलदैत्यहा न ते १४

दैत्यहा, दैत्यान्हतवानिति दैत्यहा । भैरवाकृतिमन्तरा संग्रामेषु देवानां दैत्यवधकारकत्वं न सम्भवति, नादृशाकारमन्तरा कोपानुत्पत्तेः । कोपभैरवाकारयोश्च कार्यकारणभावः । कोपमन्तरा च युद्धमेवासंभवति । अतस्त्वमेव कोपरूपेण (ओजसा) सर्वदेवेषु व्यापी भवतीति त्वमेव दैत्यहा, न तेऽन्ये देवा इत्याशयः ॥ ९४ ॥

दिगम्बरः किल रुचिराकृतिः कटौ
परिस्रवत्क्षतजनिमुण्डभूषितः ।
त्रिशूलभृत्कपिलविलोलकुन्तलः
प्रसादितान्मयि सततं स भैरवः ॥ १५ ॥

मुण्डभूषितः, मुण्डैर्मालास्थितैर्भूषितः । पद्यं सुस्पष्टम् । रुचिरा वृत्तं "रुचिरा जभौ सजौग् चतुर्नवकौ" इति पिङ्गलसूत्रोक्तलक्षणात् ॥ ९५ ॥

बलिभुक्! त्वमुपास्सि यदाचरितं कथमप्यवतीर्य बलिं दयया ।
स नरो हि निजस्य परस्य परं विपदाम्परितोटकतामयते । ९६ ।

बलिभुक्, बलिमुपहारं भक्तनिवेदितं भुङ्क्ते भुनक्ति वा सः । खाद्य पदार्थानपूपवटकादीन्भुङ्क्ते, भोग्यान् गन्धमाल्यादीन्भुनक्तीति विवेकः । यद्दत्तं बलिं त्वं कथमप्यवतीर्य केनापिरूपेण प्रकटीभूत्वेत्यर्थः, स्वीकुरुषे । स साधकवरः स्वस्य परेषां वा विपदां नाशकरो भवतीति पद्यार्थः । नामजापेन तुष्टो बटुः साधकस्यापि स्वपरविपत्तिनिवारणसामर्थ्यं करोतीति कालसङ्कर्षण तन्त्रे कथितं—स भवेत्साधकवरः सर्वापत्तिनिवारक इति । तोटकं वृत्तम्—"इह तोटकमम्बुधिसैः प्रथितम्" इति लक्षणात् ९६

यदवधि बलिभुङ्नाथो भवति न भुवने प्रीतः ।
तदवधि सकलो लोकः कथमपि सुखितो नास्ते ॥ १७ ॥

बलिभुजां देवानां नाथः स्वामी बलिभुङ्नाथः । ब्रह्मादीनामपि नियन्तेत्यर्थः । एतादृशस्य भगवतो बटुकस्य यदवधि प्रीणनं न, तदवधि लोकस्य सुखिता क्वेति साम्प्रतम् । तदुक्तं देवाधिनायकत्वं नियामकत्वं चास्य योगिनीतन्त्रे श्रीकालिकयादेव्या ब्रह्मविष्ण्वादिकानाञ्च ब्रह्माण्डान्तरवासिनाम् । नित्यं नियामकस्त्वं हि "भव भैरव सत्तम" इति ॥ १७ ॥

नयनपरिलसद्भालः कलितनरशिरोमालः ।
दलयतु दुरितोज्जालं भुजगशिशुभृतो बालः ॥ १८ ॥

बालः, बालरूपावस्थापन्नः । षट्चाष्टौबटुकः स्मृत इत्युक्तेः । यद्वा वं अमृतम् अलति पूरयाति स बालः । अल भूषणपर्याप्तिशक्तिवारणेषु इति सदाशिव शास्त्रिणः प्राहुः । स्पष्टं पद्यम् । भुजगशिशुभृत इति–भुजगानां शिशुभिर्भृतः वेष्टितः । नागहारनागपाशनागयज्ञोपवीतिसर्पयुक्तनामकत्वात् । यद्वा भुजगैः शिशुभिश्च स्वसाविभूतैर्भृतः वेष्टितः परिवृत इत्यर्थः । भुजगशिशुभृता छन्दोऽपि "भुजगशिशुभृता नौम्" इति लक्षणात् ॥ १८ ॥

कामकीलितमानसा भुवि ये जनाः शुचिभक्तितो
राजसैरुपचारकैः प्रयजन्ति बालपराक्रमम् ।
प्राप्नुवन्ति सुसाधकाः किल ते स्वचित्तविचारिताः
सम्पदो, रमयन्ति ताँश्च मनोहरा विबुधप्रियाः ॥ १९ ॥

बालपराक्रमः, बालानामिव पराक्रमः शीघ्रं सन्तुष्टत्वं च यस्य सः । अत्र शदाशिवशास्त्रिणस्तु बालस्य मोहिनीरूपश्रीकृष्णस्य पराक्रमः शक्तिर्यस्मात्स इत्याहुस्तद्भावयन्तु सुधियः । अस्माकन्तूपरि स्पष्टोर्थः । बाला हि सर्वस्वप्रदा भवन्ति मनोमोदमात्रेण, तद्वद्यमपि भगवान्बटुकः । पद्ये तु सकामा ये जना राजसोपचारैः पूजयन्ति बटुकं, ते शीघ्रमेवाभीष्टं लभन्त इति वर्णितम् । सकामानां राजसं ध्यानमेवोक्तं रुद्रयामले–राजसं धर्मकामार्थसिद्धिदामिति । तादृशध्यानेन पूजया बलिना च स्वाभीष्ट-

लाभोऽपि तत्र–यं यं चिन्तयते कामं तन्तंप्राप्नोति मानव इत्यादि बहुधावर्णितः। विबुधप्रिया वृत्तम्। तदुक्तं पिङ्गलाचार्येण–विबुधप्रिया रसौ जौ भरौ वसुदिश इति ॥ ९९ ॥

देवैः स्वयाऽधिकृतिनियमितं दुःखं नृणां ह्रियत इह परम्।
सर्वं दुःखं त्वमरमपहरन् सर्वापत्तारण इति कथितः ॥ १०० ॥

सर्वापत्तारणः, सर्वाभ्यः आपभ्यस्तारयति भक्तान्सः। देवाः सर्वे स्वस्वाधिकारनियमितदुःखहारकाः सन्ति, परं भवान् सकलापत्तिवर्गान्द्रुतमेव हरतीति भवतः सत्यं नामैतद् इत्याशयः। तथा च नाम्नैवायमापदुद्धारबटुकोस्तीति किम्बहुना, भक्तविपदुद्धारणायैवास्यावतारस्तदुक्तं रुद्रयामले 'मयादुःखविनाशाय भैरवं रूपमाश्रितम् इति ॥ १००॥

दुष्टैर्दुर्गं त्रिनयनदलवत्ताराव्याजभ्रमरविलसितम्।
वक्त्राम्भोजं श्वसनपरिमलं दृग्भागे मे भवतु तव बटो ! ॥ १०१ ॥

दुर्गः, दुःखेन ज्ञातुं गन्तुं शक्यः। चित्स्वरूप इत्यर्थः। सच्चित्स्वरूपे हि दुर्गता श्रुतिसिद्धा, यथा यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति। पद्ये च भक्तिवशाद्दुष्टैर्दुर्ग इत्युक्त्वा तत्कृपयैव" यमेष वृणुते स तेनायं लभ्यः इतिश्रुत्यनुसारं कदाचिदस्मत्सौभाग्यतया ममापि दृशि भवद्दर्शनं भवत्विति विनताभ्यर्थना। बटुकमुखे कमलरूपणं सावयवि सत्कमपि चमत्कारातिशयं पुष्णातीति सहृदयाः प्रमाणम्। भ्रमरविलसिता वृत्तम्। म्भौन्लौ गः स्याद्भ्रमरविलसितेतिलक्षणात् ॥ १०१ ॥

प्रेताधिवासे निशि दुष्टभूतनिषेवितं ये विधिना भजन्ति।
आख्यानिकीं तेकलयन्ति सिद्धिं समासमप्रश्नसदुत्तराणाम् १०२

दुष्टभूतनिषेवितः, दुष्टैर्भूतैर्निषेवितः। भूतनाथत्वात्। अत एव प्रेताधिवासे तदाराधनवर्णनमुपयुक्तम्। ये भूतवर्तमानभविष्यत्कालिकप्रश्नोत्तरं कर्तुमीहन्ते तैरेवं करणीयमितिविधिः। तदुक्तं भैरवयामलतन्त्रे–"श्मशाने तु समागत्य मन्त्रंजप्त्वा बलिं हरेत्। भवेयुस्तत्क्षणादेव सिद्धा विद्याश्चतुर्दश इत्याद्युपक्रम्य वर्षेण च महादेवि शिवरूपो हि निश्चितम् इति। षण्मासैश्च नरो जप्त्वा नाम्नामष्टोत्तरं शतम्। त्रिकालज्ञो भवेद्देवि सत्यं सत्यं न संशयः। इति च। आख्यानिकी वृत्तम् आख्यानिकी तौ

जगौग् जतौ जगौग् इति पिङ्गलसूत्रम्। दुष्टा अपि भूता यं सेवन्त इति च महाँस्तस्य चमत्कारः। खला हि चमत्कारं नमस्कुर्वन्ति इति न्यायात्। एवं च देहत्यागानन्तरं मृतात्मभिरपि सेवनीयो बटुरेवेति विशेषः॥ १०२॥

पादतले यस्याऽखिलकामाः सन्ति स यस्मिँस्तुष्यति कामी।
तस्य गृहे सिद्धिः समुपैति दिव्यदशाढ्या रुक्मवती च॥ १०३॥

कामी, पूर्णकामः। कामाः सर्वेऽस्याधीनाःसन्ति, नायं कामाधीन इति। यद्वा कं सुखं अमति प्रापयति भक्तेषु स कामीति सदाशिवशास्त्रिणो वदन्ति। एतादृशः कामपूरणो यस्मिँस्तुष्यति स दिव्यां रुक्मतीं सुवर्णवतीं सिद्धिं प्राप्नोतीति पद्याशयः। रुक्मवतीवृत्तं—"भ्मौ सगयुक्तौ रुक्मवतीयम् इति लक्षणात्॥ १०३॥

यस्त्वां त्रिजगत्कलानिधिं ध्यात्वा विधिपूर्वमसाधयत्।
विद्यायुतयुक्तयः कला सर्वा इह तं समुपस्थिताः॥ १०४॥

कलानिधिः, कलानां निधिः। निवृत्यादि पञ्चाशत्कलानां सोमसूर्याग्नीनामः षट्त्रिंशत्कलानां वा निधिः। पद्याशयस्तु सरलः। उपस्थितावृत्तम् उपस्थिता तजौ जगौ इति छन्दः शास्त्रे पिङ्गलाचार्यः॥ १०४॥

देवानामप्यनुपमकान्तं ध्यायन्तं त्वां लुलदलकान्तम्।
यं यं पश्यन्त्यमररमण्यस्तन्तं वाञ्छन्त्यतिशयमत्ताः॥ १०५॥

कान्तो, मनोहरः। देवानामपि मध्येऽनुपमकान्तं लुलदलकान्तं त्वां ये ध्यायन्ति ताञ्जनान्पश्यन्त्य एवामररमण्योऽतिशयेन मत्ताः सत्यो वाञ्छन्ति। तवेदृशंमाहात्म्यमित्यर्थः। मत्ता छन्दः। "ज्ञेया मत्ता मभसगयुक्तेति लक्षणात्"।॥ १०५॥

अधिकमिह कथं वाच्यस्ते महामहिमा मया
स्फुरति यदभिधा तेऽसौ कामिनीवशकृद्वशी।
भवति भवति यो ध्यानालीयमानमनाः परं
स विबुधसुदृशामासेव्यो वशी च यथा हरिः॥ १०६॥

कामिनीवशकृद्वशी । कामिन्या मदिरायाः कान्ताया वा वशकृच्चासौ वशी कामिनीवशकृद्वशी, कामिन्या मदिरायाः कान्ताया वा वशकरोऽपि जितेन्द्रिय इत्यर्थः । गोपी रमयन्कृष्णोऽच्युत इवेति बोध्यम् । यद्वा कामिन्या मदिराया वा वशकृतोऽपि वशयतीति सः । अर्थात् मदिरया कामिन्या च ये न मुह्यन्ति तानपि महात्मानस्त्वं स्वमायया वशयसीति भावः । "कामिनी मदिरा कान्ता" इति शब्दार्थचिन्तामणिः । उभयोरप्यर्थयोः स्वीकारे पद्यवर्णनं संघटते । एतादृङ्महिमवति त्वयि यो ध्यानैकतानमना भवेत्स सुरसुन्दरीणामासेव्योऽपि जितेन्द्रियो भवेद्यथा हरिरच्युत इतिभावः । अत्र कामिनी वशकृत् वशीति नामद्वयमपि मिलति कुत्रचित् पुस्तकेषु, परन्तत्रान्तिमनाम्नोः प्रभुविष्ण्वोरैक्यं कृतं प्रभविष्णुरिति तत्समम् । यथा अत्र नामभेदस्तथा तत्रैक्यमन्यथा नाम्नामष्टोत्तरशताधिक्यापत्तेः । परमस्माभिरादर्श पुस्तकेषु बहुमतत्वादिदमेव स्वीकृतमिति बोध्यम् । हरिनामकच्छन्दः । रसयुगहययुङ् नौम्रौ सो लगौ हि यदा हरिरितिच्छन्दः शास्त्रोक्त लक्षणात् ॥ १०६ ॥

त्वमसि विधिवदर्चनैर्नामजापादिभि-
यद्वशे चण्डदोर्द्दण्डवान्दण्डभृद्दण्डकः ।
स किल सुरमुनीन्द्रगन्धर्वसिद्धादिभि-
र्वन्द्यते नन्द्यते स्तूयते पूज्यते ।
जगदपि विभुरस्ति कर्तुं तथाप्यायितुं
हर्तुमप्येककाले विशालेक्षणः ।
न तदिदमति विस्मयाधायकं दृश्यते
सेवतां सर्वसिद्धिप्रदन्ते पदम् ॥ १०७ ॥

सर्वसिद्धिप्रदः, सर्वाः सिद्धीरञ्जनपादुकागुटिकारसायनादिरूपाः प्रकर्षेण ददातीति सः । तदुक्तं कालसङ्कर्षणतन्त्रेऽष्टोत्तरशतनामप्रकरणे—"वर्षद्वयमधीयानः पादुकासिद्धिमान्भवेत् । अञ्जनं गुटिका खड्गं धातुवादरसायनम् । सारस्वतं च वेताल वाहनं बिलसाधनम् । कार्यसिद्धिं महासिद्धिं मन्त्रं चैव समीहितम् । वर्षत्रयमधीयानः प्राप्नुयात्साधकोत्तमः" इति । पद्येऽपि यद्वशे त्वमसि स किल देवप्रभृतिभिर्वन्द्यते पूज्यत इत्यादि गुम्फितं, तत्र प्रमाणं यथा—रुद्रयामलीयभैरवसहस्रनामफलश्लोकेषु

"स्तवमेनं पठेन्मन्त्री पाठयित्वा यथाविधि, दुर्लभां लभते सिद्धिं सर्वदेवनमस्कृताम्" इति। तथा च जगत्कर्तुं हर्तुमपि समर्थो भवेदित्युक्तं, तदपि नित्यमनन्यतया ध्यायतो जनस्य विषयम्। तादृशस्यैव विभुत्वसंभवात्। तदुक्तं भैरवतन्त्रे—"भैरवाराधनासक्तो यो भवेन्मतिमान्नरः। सदाशिवः स विज्ञेयो भैरवेणेति भाषितम्" इति। सदाशिवत्वे च सति साधकः किं न कुर्वीतेति सर्वं युक्तम्। दण्डकं छन्दः। "दण्डको नौरः" इति पिङ्गलसूत्रम्। तत्र द्वौ नगणौ रगणाः सप्त च प्रतिपदं भवन्तीति विवेकः ॥१०७॥

ये क्रान्ताः स्वमगणितामयैर्नराणां-
ते वैद्याः किमु गदहा भवन्ति लोके।
नाम्नापि स्मृत इह दृष्टमप्यदृष्टं
लोकानां हरसि गदं त्वमेकवैद्यः ॥ १०८ ॥

वैद्यः, सर्वरोगहरत्वात्। पद्ये सत्यमेवप्रतिभाति, ये वैद्याः (नामधारिणः) स्वयमगणितै रोगैराक्रान्तदेहा भवन्ति ते कथं यथार्थनामवन्तो गदहा भवन्ति नृणाम्। त्वन्तु नाम्नाऽपि च स्मृतेरपि दृष्टादृष्टमुभयविधं रोगमपहरसीति सत्यं सफलं तवैव वैद्यत्वम् इति। बटुकनाम्नां स्मरणेन (पठनेनापि) दृष्टादृष्टरोगा नश्यन्तीति भणितं शिवागमसारे नामावलि (स्तवराज) मुद्दिश्य, वैद्यानामपि दुःसाध्यो रोगो भवति यस्य वै। तस्य रोगस्य शान्त्यर्थं पठेत्स्तोत्रमनुत्तमम् इति ॥ १०८ ॥

केचित्त्वामजमपरे महेशरूपं
केऽपीशं बटुमितरे च तत्वमेके।
सम्प्राहुस्त्रिविधगुणाश्रयं वयन्तु
ब्रह्म त्वां खिलजगताम्प्रभुं वदामः ॥ १०९ ॥

प्रभुः, प्रभवति ब्रह्मादीनामुपरि स प्रभुः, ब्रह्मस्वरूप इति यावत्। ब्रह्मैवोपासकैर्नानाविधमाम्नातं भवति। तद्धि पद्ये गुम्फितं विभावयन्तु सुधियः सहृदयाः। ब्रह्मण एव सगुणतैषणायां नामभेदा इमे युज्यन्ते ॥ १०९ ॥

अंशांशैः सकलचराचरे लसन्ती
दिव्या ते विमलविभूतिरस्ति विष्णुः ।
लोकानामुपकृतये बटुस्वरूपं
सम्प्राप्ता जयति मनःप्रहर्षिणीयम् ॥ ११० ॥

विष्णुः, वेवेष्टि व्याप्नोति चराचरं जगत्स विष्णुः सर्वव्यापक इत्यर्थः । एको-देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेति श्रुतेः । अंशांशतः सर्वचराचर मध्यगा तव दिव्या विभूतिरेव सर्वव्यापिकास्ति, तदुक्तं गीतासु—"विष्टभ्याहमिदं-कृत्स्नमेकांशेन स्थितो जगत्" इति । सैवेयं लोकोपकाराय बटुस्वरूपं लीलाबालक-तनूं प्राप्ता अत एव मनसः (प्रेक्षणं कुर्वतां) प्रकर्षेण हर्षकरी सती जयति सर्वोत्क-र्षेण वर्तते इति भावः । प्रहर्षिणी वृत्तञ्च "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ ११० ॥

नामावलिस्ते क्व सुगूढतत्त्वा क्व मन्दबोधा च मतिर्ममेति ।
किञ्चिन्तये प्रेम मदीयमस्यामहैतुकं मां स्वयमाचकर्ष ॥ १११ ॥

द्वौ क्वशब्दौ मतिनामावल्योर्महदन्तरं सूचयतः । अस्यां तव नामावलिस्तवरच-नायां तव चरणानुबन्धि मदीयमहैतुकं प्रेमैव प्रावर्तयदिति भावार्थः ॥ १११ ॥

तत्रापि जाने हृदि मे विराजता त्वयैव ते नाम नुतिर्विगुम्फिता ।
निमित्तमेवास्मि तु तत्कृतौ लिपेः श्रीभारतस्यार्जुनवद्गणेशवत् ११२

प्रेमप्रेरितोऽपि जानेहं ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठतीति गीतासूक्त्य-नुसारं हृदये निवसता हरिस्वरूपेण त्वयैव तवेयं नाम्नां नुतिर्गुम्फिता, अकिञ्चित्क-रोहं तु "श्रीभारतस्य" एतदभिधानस्य युद्धस्य करणेऽर्जुन इव "भारतस्य" एतदभिधानेतिहासमहाग्रन्थस्य लेखने च गणेश इव निमित्तमात्रमस्मीति भावः । भारते युद्धेर्जुननिमित्ततायां तु मानं गीतास्वेव भगवद्वचः—"निमित्तमात्रं भव सव्य-साचिन्" इति । भारतलेखने गणेशस्य निमित्तता स्फुटैव । यद्व्यासेन रचितं भारतं परं शीघ्रलेखनार्थं कः सज्जेतेति प्रस्तावं गणेशः स्वीकृत्यमहाभारतं व्यास-मुखाद्यथाश्रुतं लिलेखेति ॥ ११२ ॥

भवाननेन स्तवकेन तुष्टो वरं वृणीष्वेति च मां यदाह ।
मनो निरीहं तु भवन्तमेत्य जातं सुधाब्धौ सरितामिवाम्भः ॥११३॥

सुधाम्बुधिं सरिदम्भ इव मन्मनस्त्वामुपेत्य निस्पृहं निश्चलं च जातमिति न किमपि वाञ्छामि भवतस्तवेनानेन सुप्रीतादपीति भावः ॥ ११३ ॥

अनेन मां त्वम्परिलङ्घिताज्ञकं प्रमन्यसे चेदिति किञ्चिदर्थये ।
ध्याये तदा पाणिलसद्वराभयो मन्दं हसन्दृक्पथमेहि नाथ मे ११४॥

वृणीष्वेति समाज्ञप्तोऽपि न किञ्चिदर्थितवानित्यनेन भवदाज्ञाभंगदोषो मयि माप्रसज्यतामिति भवदाज्ञां पालयन्किञ्चिदप्यर्थये तच्चेदं, यदा ध्याये तव ध्यानं कुर्वीय, तदैव पाणिलसद्वराभयो भवान्मन्दं हसन् मे दृष्टिपथं प्रायात्तुतरामिति ॥ ११४ ॥

उदीरितो यन्महिमा महीयान् हरेणगौरीम्प्रति विस्तरेण ।
अष्टोत्तरं नामशतम्बटोस्तन्नुतं नतं श्रीहरिणा मयापि ॥ ११५ ॥

यस्य नाम्नामष्टोत्तरशतस्य महीयान्माहिमा हरेण विस्तरतो गौरीम्प्रति वर्णितस्तदेव बटोर्नाम्नामष्टोत्तरं शतं श्रीहरिणा मयाऽपि नुतं च नतमिति भावार्थः । अनेनास्य माहात्म्यप्रदर्शनं फलप्रकथनं च नावश्यकमिति सारः । यन्महादेवेन रुद्रयामलशिवागमसारभैरवयामलादिनानातन्त्रशास्त्रेषु भैरवनाम्नां महिमा विस्तरतो वर्णितोऽस्तीति कृतं तत्कथनेन । एवं च यद्यत्फलमापदुद्धारवटुकनाम्नामष्टोत्तरशतस्य जपतो भवति, तत्तदेव मत्कृतस्यास्य सिद्धिस्तवस्य पाठतो भविष्यतीति निर्विवादम । यतोऽस्मिँस्तवे तान्येव नामानि सन्ति, तथा चात्र तान्यर्थनिर्वचनपुरस्सरमिति विशेषः ॥ ११५ ॥

गायत्र्या गरुडध्वजस्य गिरिजाभर्तुः शिवायास्तथा
विघ्नेशस्य च मारुतेर्नरहरे रामादिकाणान्तथा ।
शीघ्रं सिध्यभिलाषिणो भुवि पुरश्चर्यारता ये जना-
स्तेध्यायन्तु बटुं च मत्कृतमिदं स्तोत्रम्पठन्त्वादरात् ॥११६॥

ये जना गायत्र्यादिदेवतास्तत्तन्मन्त्रपुरश्चरणैराराधयन्तोऽपि कलेः प्राबल्यादितरविघ्नादिदोषाद्वा सिद्धिं न लभन्ते, तैः स्वाभीष्टमन्त्रप्रयोगे नित्यं तन्मन्त्रनियमितजपस्य चादौ तथान्तेऽपि बटुकभैरवाराधनं स्वाभीष्टसिद्धेस्त्वरितप्राप्त्यै कर्तव्यम् । तद्यथा-संक्षेपतः-तन्मनुसम्पुटितनामावल्या एकादशाद्यष्टोत्तरशतान्तं यथावकाशं पाठा, अन्ते चास्मत्कृतेनानेन सिद्धिस्तवेन श्रीबटुकभैरवप्रसादोऽवश्यं करणीय इति रहस्यमावेद्यते । एवञ्च कृते समीहितदेव-मन्त्र-प्रयोगसिद्धिर्निर्विघ्नं प्रयोगोल्लिखितसमय एव भवतीति सुदृढं ब्रूमः । परिपाटीचैषा बटुकाराधनस्य श्रीगुरुणाऽधिगन्तव्येति तत एव ज्ञायतां गृह्यतां विनयादिनेति दिक् ॥ ११६ ॥

**भक्त्या भैरवमागमोक्तविधिना सम्पूज्य दत्वा बलिं**
**चित्तैकाग्रतया निशीथसमये यः स्तोत्रमेतत्पठेत् ।**
**तस्यात्रैव किमात्रिविष्टपतलं दुःसाध्यमिष्टं न वै**
**किन्त्वेतेन सुसाधिते तु बटुके ब्रह्मैव स ब्रह्मवित् ॥ ११७ ॥**

स्वतन्त्रतयाऽप्यस्य प्रयोगो वर्ण्यते-तथाहि भक्तिपूर्वकमर्धरात्रे देवं श्रीबटुकभैरवमागमोक्तविधिना सम्पूज्य तस्मै बलिञ्च दत्वैकाग्रचित्तः सन्यो नर एतेन स्तवेन देवं प्रसादयेत्तदा तद्वाञ्छितमिहत्यमेव किं त्रिविष्टपपर्यन्तमपिगतं दुर्लभं नस्यादवश्यं स तत्प्रानुयादित्यर्थः । तदुक्तं शारदातिलके विंशतितमे पटले-इति सम्पूजयेद्देवं बटुकं प्रोक्तवर्त्मना । धर्मार्थकाममोक्षाणां पतिर्भवति मानव इति ॥ विशेषतोऽनेन बटुके साधिते तु स साधकोऽपि ब्रह्मैव भवेत् । बटुकस्य ब्रह्मस्वरूपत्वादित्यनुपदमुक्तम् । ब्रह्मविदश्च तत्सरूपभावः । ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः ॥ ११७ ॥

---

विज्ञाः श्रीमधुसूदनप्रभृतयः षट्शास्त्रपारङ्गताः
एकीभूय, निशम्य यस्य कवितामाह्लादिनीं चेतसां ।
सर्वे श्रीकविभूषणं पदमदुर्मध्येसभं यत्कृते
तेन श्रीहरिणा कृतोऽयमगमत्सिद्धिस्तवः पूर्णताम् ॥ १ ॥

ॐ श्रीः

३० ॐ ह्रीं भैरवो भूतनाथश्च भूतात्मा भूतभावनः
क्षेत्रज्ञः क्षेत्रपालश्च क्षेत्रदः क्षत्रियो विराट् ।१।
श्मशानवासी मांसाशी खर्पराशी स्मरान्तकृत ।
रक्तपः पानपः सिद्धः सिद्धिदः सिद्धिसेवितः ।२।
कंकालः कालशमनः कलाकाष्ठातनुः कविः
त्रिनेत्रो बहुनेत्रश्च तथा पिंगललोचनः ।३।
शूलपाणिः खड्गपाणिः कंकाली धूम्रलोचनः ।
अभीरुर्भैरवीनाथो भूतपो योगिनीपतिः ।४
धनदो धनहारी च धनवान् प्रतिभानवान्
नागहारो नागपाशो व्योमकेशः कपालभृत ।५।
कालः कपालमाली च कमनीयः कलानिधिः
त्रिलोचनो ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपः ।६
त्रिनेत्रतनयो डिम्भः शान्तः शान्तजनप्रियः ।
बटुको बहुवेशश्च खट्वाङ्ग वरधारकः ।७।
भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः
धूर्तो दिगम्बरः शौरिर्हरिणः पाण्डुलोचनः ।८।
प्रशान्तः शान्तिदः सिद्धः शंकरप्रियबान्धवः ।
अष्टमूर्तिर्निधीशश्च ज्ञानचक्षुस्तपोमयः ९
अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखः
भूधरो भूधराधीशो भूपतिर्भूधरात्मजः ।१०
कंकालधारी मुण्डी च नागयज्ञोपवीतवान्
जृम्भणो मोहनः स्तम्भी मारणः क्षोभणस्तथा ।११।
शुद्धनीलाञ्जनप्रख्यो दैत्यहा मुण्डभूषितः ।
~~कालः कपालमाली~~ बलिभुग् बलिभुङ्नाथो ~~दैत्यहा मुण्डभूषि~~
बालो बालपराक्रमः । १२
~~कामि~~ सर्वापत्तारणो दुर्गो दुष्टभूतनिषेवितः । १३
कामी कलानिधिः कान्तः कामिनी वशकृद्वशी
सर्वसिद्धिप्रदो वैद्यः प्रभुर्विष्णुरितीव हि ।१४
अष्टोत्तरशतं नाम्नां भैरवस्य महात्मनः ।

श्रीहरिः

॥ श्रीः ॥

# अवलोकयन्तु सहृदयाः पाठकमहाशया अस्मद्विरचितानि संस्कृतपुस्तकानि.

१. राममातस्तूजनम्—शिखरिणीच्छन्दोबद्धम् । मूल्यम् =)

२. वाणीलहरिः——सुललित शिखरिणीच्छन्दोबद्धा स्वरचितहिन्दीपद्यानुवादमहिता चेयं विद्यां कामयतां छात्राणां कवितामभिलाषिणां चातीव [illegible] । बहुशोऽलङ्कारा भावाश्चात्र कविना संनिवेशिताः साहि[illegible]दं प्रकाशयन्तो हरन्ति मनांसि सुमनसाम् । प्रतिपद्यं विद्या[illegible]न्येव कामना प्रकटितेति सर्वं दर्शनतो व्यक्तं भविष्यति पा[illegible]नाम् । मूल्यम् ≡)

३. सुवर्ण लक्ष्मीनक्षत्रमाला—महालक्ष्मीस्तुतिरियमनेकरागेषु गेयाभिर्गीतिभि[illegible]ना स्वकृतहिन्दी लावणी छन्दोनुवादसहिततया च सर्वमनोरञ्जनकरी संजाता. मूल्यम् =)॥

४. प्रेमसुधा-——हिन्दीगेयपद्यानुवादसहिता । प्रसादगुणप्रधानैर्मधुरैः पद्यैरत्र पितृपुत्रयोरिव कविभगवतोः प्रेमाभियोगमयं निबन्धनं पठतां हृदयेषु करुणसहितवात्सल्यस्य स्फूर्तिं कलयतीतिसेयं भक्तिपक्षीयैर्भागवतैरवश्यं पठितव्या श्रोतव्या मन्तव्या निदिध्यासितव्या च । मूल्यम् ।-)

५. उदरप्रशस्तिः——विदुषां मनोविनोदनकरमिदं पुस्तकं दर्शयति सम्यगुदरस्यमहिमानं परिणामतश्च किमपि मधुरं तत्वमुपदिशति । हिन्दीसमवृत्तपद्यानुवादसंयुततयाचेदं सर्वसाधारणजनोपयोगि संजातमिति सुधीभिरवश्यं प्रेक्षणीयम् । मूल्यम् ॥)

६. सिद्धिस्तवः——अयन्तु पाठकमहोदयानां करकमलयोर्विजयत एवेति नाविशेषं ब्रूमः किं दर्पणेन करसन्धृत कंकणार्थ मिति लौकिकन्यायात् । मूल्यम् ।=)

## अस्मद्विरचितानुवादग्रन्थाश्चैते

७. श्रीशिवमहिम्नःस्तवस्य—हिन्दी समवृत्तानुवादः शैशव एवायं विरचितः कवेरुदयन्तं हिन्दीभाषायां कविताभ्यासमावेदयति पाठकेभ्यः । मूल्यम् =)॥

८. श्रीभर्तृहरिकृत——नीतिशतकस्य हिन्दीसमवृत्तानुवादः । अमुद्रितः

९. ,, शृंगारशतकस्य हिन्दीसमवृत्तानुवादः । ,,

१०. ,, वैराग्यशतकस्य हिन्दीसमवृत्तानुवादः । ,,

११. श्रीगीतगोविन्दस्य—हिन्दी समगीतिकानुवादः इमेऽपि यथासंभवं त्वरयैव प्रकाशमेष्यन्ति ।

---